नाम्नैकवृन्दः परिकीर्त्तितोऽसौ व्याधिर्बलासक्षतजप्रसूतः ॥ १२६ ॥

*अन्तः = गलमध्ये । अपाकी = ईषत्पाकी । अमृदुः = ईषन्मृदुः॥१२६॥

११ अथ वृन्दलक्षणमाह—

समुन्नतं वृत्तममन्ददाहं तीव्रज्वरं वृन्दमुदाहरन्ति ।
तं चापि पित्तक्षतजप्रकोपाद्विद्यात्सतोदं पवनात्मकं तु ॥ १२७ ॥

१२ अथ शतघ्नीलक्षणमाह—

वर्त्तिर्घना कण्ठनिरोधिनी तु चिताऽतिमात्रं पिशितप्ररोहैः ।
अनेकरुक्प्राणहरी त्रिदोषाज्ज्ञेया शतघ्नीसदृशी शतघ्नी ॥ १२८ ॥

*घना = कठिना । अनेकरुग् = वातपित्तकफजनोदृदाहकण्डूवा-दियुक्ता । शतघ्नीसदृशी = लौहकण्टकसञ्छन्ना शतघ्नी महती शिला, तत्तुल्या, यतः प्राणहरी ॥ १२८ ॥

१३ अथ गिलायुलक्षणमाह—

ग्रन्थिर्गले त्वामलकास्थिमात्रः स्थिरोऽल्परुक्स्यात्कफरक्तमूर्त्तिः ।
संलक्ष्यते सक्तमिवाशितञ्च स शस्त्रसाध्यस्तु गिलायुसंज्ञः ॥ १२९ ॥

१४ अथ गलविद्रधिलक्षणमाह—

सर्वं गलं व्याप्य समुत्थितो यः शोथो रुजः सन्ति च यत्र सर्वाः ।
स सर्वदोषैर्गलविद्रधिस्तु तस्यैव तुल्यः खलु सर्वजस्य ॥ १३० ॥

१५ अथ गलौघलक्षणमाह—

शोथो महान्यस्तु गलावरोधी तीव्रज्वरो वायुगतेर्निहन्ता ।
कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्तितोऽसौ ॥१३१॥

*वायुगतेर्निहन्ता = उदानवायुगतिनिरोधकः ॥ १३१ ॥

१६ अथ स्वरघ्नलक्षणमाह—

यस्ताम्यमानः श्वसिति प्रसक्तं भिन्नस्वरः शुष्कविमुक्तकण्ठः ।
कफोपदुष्टेष्वनिलायनेषु ज्ञेयः स रोगः श्वसनात्स्वरघ्नः ॥ १३२ ॥

*ताम्यमानः = तमः पश्यन् । शुष्कविमुक्तकण्ठः = शुष्को विमुक्तो = ऽस्वाधीनः कण्ठो यस्य सः । अस्वाधीनता भक्तं गिलितुमशक्यत्वात् । अनिलायनेषु = वायुवर्त्मसु श्वसनात् = वातात् ॥१३२॥

१७ अथ मांसतानलक्षणमाह—

प्रतानवान्यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण ।

स मांसतानः कथितोऽवलम्बी प्राणप्रणुत्सर्वकृतो विकारः ॥१३३॥

*प्रतानवान्=विस्तारवान् । सुकष्टः=अतिशयितं कष्टं यत्र सः ॥१३३॥

१८ अथ विदारीलक्षणमाह—

सदाहतोदं श्वयथुं सताम्रमन्तर्गले पूतिविशीर्णमांसम् ।
पित्तेन विद्याद्वदने विदारीं पार्श्वे विशेषात्स तु येन शेते ॥१३४॥

*सः=पुरुषो, येन=पार्श्वेण, विशेषात्=बाहुल्येन, शेते, तस्मिन्पार्श्वे, सा विदारी भवतीत्यर्थः ॥ १३४ ॥

अथ गलरोगचिकित्सामाह—

रोहिणीनान्तु साध्यानां हितं शोणितमोचनम् ।
वमनं धूमपानञ्च गण्डूषो नस्यकर्म च ॥
वातजान्तु हृते रक्ते लवणैः प्रतिसारयेत् ।
सुखोष्णान्स्नेहगण्डूषान्धारयेच्चाप्यभीक्ष्णशः ॥
विस्राव्य पित्तसम्भूतां सिताक्षौद्रप्रियङ्गुभिः ।
घर्षयेत्कवलो द्राक्षापरूषैः कथितो हितः ॥
आगारधूमकटुकैः कफजां प्रतिसारयेत् ॥ १३५ ॥

*आगारधूमः="कोल"इति लोके । कटुकानि=शुण्ठीपिप्पलीमरिचानि ॥ १३५ ॥

श्वेताविडङ्गदन्तीषु तैलं सिद्धं ससैन्धवम् ।
नस्यकर्मणि दातव्यं कवलश्च कफोच्छ्रये ॥ १३६ ॥

*श्वेता=अपराजिता ॥ १३६ ॥

पित्तवत्साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम् ।
विस्राव्य कण्ठशालूकं साधयेत्तुण्डिकेरिवत् ॥ १३७ ॥
एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः ।
उपजिह्विकवच्चापि साधयेदधिजिह्वकम् ॥ १३८ ॥
एकवृन्दं तु विस्राव्य विधिं शोधनमाचरेत् ।
एकवृन्दमिव प्रायो वृन्दञ्च समुपाचरेत् ॥ १३९ ॥
गिलायुश्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत् ।
अमर्मस्थं सुसम्पक्वं छेदयेद्गलविद्रधिम् ॥ १४० ॥

अथ गलरोगाणां सामान्यचिकित्सामाह—

कण्ठरोगेष्वसृङ्मोक्षैस्तीक्ष्णैर्नस्यादिकर्मभिः ।
चिकित्सकश्चिकित्सान्तु कुशलोऽत्र समाचरेत् ॥ १४१ ॥
क्वाथं दद्याच्च दार्वीत्वङ्निम्बताक्ष्यंकलिङ्गजम् ।
हरीतकीकषायो वा हितो माक्षिकसंयुतः ॥ १४२ ॥
कटुकाऽतिविषादारुपाठामुस्तकलिङ्गकाः ।
गोमूत्रकथिताः पीताः कण्ठरोगविनाशनाः ॥ १४३ ॥
मृद्वीका कटुका व्योषं दार्वीत्वक् त्रिफला घनम् ।
पाठा रसाञ्जनं दूर्वा तेजोह्वेति सुचूर्णितम् ॥ १४४ ॥
क्षौद्रयुक्तं विधातव्यं गलरोगे महौषधम् ।
योगाश्चैते त्रयः प्रोक्ता वातपित्तकफापहाः ॥ १४५ ॥
यवाग्रजं तेजवतीञ्च पाठां रसाञ्जनं दारुनिशां सकृष्णाम् ।
क्षौद्रेण कुर्याद् गुटिकां मुखेन तां धारयेत्सर्वगलामयेषु ॥ १४६ ॥

अथ समस्तमुखरोगाणां निदानं संख्यां चाह—

पृथग्दोषैस्त्रयो रोगाः समस्तमुखजाः स्मृताः ॥ १४७ ॥

१ अथ वातजमुखरोगलक्षणमाह—

स्फोटैः सतोदैर्वदनं समन्ताद्यत्राचितं सर्वसरः स वातात् ॥ १४८ ॥

२ अथ पैत्तिकमुखरोगलक्षणमाह—

रक्तैः सदाहैः पिडकैः सपीतैर्यत्राचितं चापि स पित्तकोपात् ॥ १४९ ॥

३ अथ कफजमुखरोगलक्षणमाह—

अवेदनैः कण्डुयुतैः सवर्णैर्यत्राचितं चापि स वै कफेन ॥ १५० ॥
*यत उक्तं सुश्रुतेन—अल्पवेदनैरिति ॥ १५० ॥

अथ मुखरोगेष्वसाध्यानाह—

ओष्ठप्रकोपे वर्ज्यास्तु मांसरक्तत्रिदोषजाः ।
दन्तवेष्टेषु वर्ज्यौ तु त्रिलिङ्गगतिसौषिरौ ॥ १५१ ॥
दन्तेषु च न सिध्यन्ति श्यावदालनभञ्जनाः ।
जिह्वारोगेष्वलासस्तु तालुजेष्वर्बुदं तथा ।
स्वरघ्नो वलयो बृन्दो बलासः स हि दारुणः (च विदारिका):
गलौघो मांसतानश्च शतघ्नी रोहिणी गले ।

असाध्याः कीर्त्तिता ह्येते रोगा दश नवोत्तराः ।
तेषु वाऽपि क्रियां वैद्यः प्रत्याख्याय समाचरेत् ॥ १५२ ॥

अथ सम्पूर्णमुखरोगाणां चिकित्सामाह—

वातात्सर्वसरं चूर्णैर्लवणैः प्रतिसारयेत् ।
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥ १५३ ॥
पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः ।
सर्वः पित्तहरः कार्यो विधिर्मधुरशीतलः ॥ १५४ ॥
प्रतिसारणगण्डूषधूमसंशोधनानि च ।
कफात्मके सर्वसरे क्रमं कुर्यात्कफापहम् ॥ १५५ ॥
मुखपाके शिरावेधः शिरसश्च विरेचनम् ।
मधुमूत्रघृतक्षीरैः शीतैश्च कवलग्रहः ॥ १५६ ॥
जातीपत्रामृताद्राक्षायासदार्वीफलत्रिकैः ।
क्राथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत् ॥ १५७ ॥
कार्यश्च बहुधा नित्यं जातीपत्रस्य चर्वणम् ।
कृष्णजीरककुष्ठेन्द्रयवचर्वणतस्त्र्यहात् ॥ १५८ ॥
मुखपाकव्रणक्लेददौर्गन्ध्यमुपशाम्यति ।
पटोलनिम्बजम्ब्वाम्रमालतीनवपल्लवैः ॥ १५९ ॥
पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने ।
पञ्चवल्कलजः क्राथस्त्रिफलासम्भवोऽथ वा ॥ १६० ॥
मुखपाके प्रयोक्तव्यः सक्षौद्रो मुखधावने ।
स्वरसः कथितो दार्व्या घनीभूतो रसक्रिया ।
सक्षौद्रा मुखरोगासृग्दोषनाडीव्रणापहा ॥ १६१ ॥
सतच्छदोशीरपटोलमुस्तहरीतकीतिक्तकरोहिणीभिः ।
यष्ट्याह्वराजद्रुमचन्दनैश्च क्राथं पिबेत्पाकहरं मुखस्य ॥१६२॥
*राजद्रुमः="घनवहेरा" इति लोके ॥ १६२ ॥
तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ।
क्षौद्राढ्यो दग्धवक्त्रस्य गण्डूषो मुखपाकनुत् ॥ १६३ ॥
आस्वादिता सकृदपि मुखगन्धं सकलमपनयति ।

त्वग्बीजपूरफलजा पवनमपास्यं वारयति ॥ १६४ ॥
हरिद्रा निम्बपत्राणि मधुकं नीलमुत्पलम् ।
तैलमेभिर्विपक्तव्यं मुखपाकहरं परम् ॥ १६५ ॥
यष्टीमधु पलमेकं त्रिशन्नीलोत्पलस्य तैलस्य ।
प्रस्थं तद् द्विगुणपयोविधिना पक्कं तु नस्येन ॥ १६६ ॥
निशि वदनस्य स्रावं क्षपयति गात्रस्य दोषसंघातम् ।
कचधर्षत्वमवश्यं क्रमशोऽभ्यङ्गेन जन्तूनाम् ॥ १६७ ॥

इति पञ्चषष्टितमो मुखरोगाधिकारः समाप्तः ॥ ६५ ॥

---

## अथ षट्षष्टितमो विषाधिकारः ॥ ६६ ॥

तत्र विषस्य द्वैविध्यमाह—

स्थावरं जङ्गमञ्चैव द्विविधं विषमुच्यते ।
दशाधिष्ठानमाद्यं तु द्वितीयं षोडशाश्रयम् ॥ १ ॥

अथ स्थावरविषस्य दश स्थानान्याह—

मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सारमेव च ।
निर्यासो धातवः कन्दः स्थावरस्याश्रया दश ॥ २ ॥

*तद्यथा–मूलविषं=करवीरादि । पत्रविषं=विषपत्रिकाऽऽदि । फलविषं=कर्कोटकादि । पुष्पविषं=वेत्रादि । त्वक्सारनिर्यासविषाणि=करम्भादीनि । क्षीरविषं=वत्सनाभशक्तुकादि ॥ २ ॥

अथ जङ्गमविषस्य षोडश स्थानान्याह—

दृष्टिनिश्वासदंष्ट्राश्च नखमूत्रमलानि च ।
शुक्रं लालाऽऽर्त्तवस्पर्शसंदंशावमर्दितम् ।
गुदास्थिपित्तशूकानि दश षड् जङ्गमाश्रयाः ॥ ३ ॥

*तद्यथा—दृष्टिनिश्वासविषाः=दिव्याः सर्पाः । दंष्ट्राविषाः=भौमसर्पाः । दंष्ट्रानखविषाः=व्याघ्रादयः । मूत्रपुरीषविषाः=गृहगोधिकाऽऽदयः । शुक्रविषाः=मूषिकाऽऽदयः । लालाविषाः=उच्चिटिङ्गादयः । लालास्पर्शमूत्रपुरीषार्त्तवशुक्रमुखसंदंशावमर्दितगुदपुरीषविषाः=चित्रशीर्षादयः । अस्थिविषाः=सर्पादयः । पित्तवि-

षाः=शकुलमत्स्यादयः। शूकविषाः=भ्रमरादयः॥ ३॥

अथ स्थावरविषाणां सामान्यकार्याणि।

१ तत्र मूलविषस्य कार्य्यमाह—

उद्वेष्टनं मूलविषैर्मोहः प्रलपनं तथा॥ ४॥

२ अथ पत्रविषकार्यमाह—

जृम्भणं वेपनं श्वासो नृणां पत्रविषैर्भवेत्॥ ५॥

३ अथ फलविषकार्यमाह—

मुष्कशोथः फलविषैर्दाहो द्वेषश्च भोजने॥ ६॥

४ अथ पुष्पविषकार्यमाह—

भवेत्पुष्पविषैश्छर्दिराध्मानं मूर्च्छनं तथा॥ ७॥

५-७ अथ त्वक्सारनिर्यासविषकार्याण्याह—

त्वक्सारनिर्यासविषैरुपभुक्तैर्भवन्ति हि।

आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंस्रवाः॥ ८॥

८ अथ क्षीरविषकार्यमाह—

फेनागमः क्षीरविषैर्विड्भेदो गुरुजिह्वता॥ ९॥

९ अथ धातुविषकार्यमाह—

हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि।

प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत्॥ १०॥

*एतानि=मूलविषाणि नव। कालघातीनि=कालान्तरमारकाणि॥ १०॥

अथ कन्दविषविशेषकार्यमाह—

कन्दजान्युग्रवीर्याणि यान्युक्तानि त्रयोदश।

सर्वाण्येतानि कुशलैर्ज्ञेयानि दशभिर्गुणैः॥ ११॥

अथ विषपरीक्षा।

स्थावरं जङ्गमं वाऽपि कृत्रिमं चापि यद्विषम्।

सद्यो निहन्ति तत्सर्वं गुणैश्च दशभिर्युतम्॥ १२॥

अथ विषस्य दशगुणानाह—

रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशु व्यवायि च।

विकाशि विशदञ्चैव लघुपाकि च ते दश॥ १३॥

अथ वैगुण्यैर्विषस्य कार्यमाह—

तद्रौक्ष्यात्कोपयेद्वायुमौष्ण्यात् पित्तं सशोणितम्।
तैक्ष्ण्यान्मतिं मोहयति मर्मबन्धाञ्छिनत्ति हि॥
शरीरावयवान्सौक्ष्म्यात्प्रविशेद्विकरोति च।
आशुत्वादाशु तत्प्रोक्तं व्यवायात्प्रकृतिं हरेत्॥
विकाशित्वात्क्षपयति दोषान्धातून्मलानपि।
अतिरिच्यते वैशद्याद् दुश्चिकित्स्यं च लाघवात्॥ १४॥
दुर्जरं चाविपाकित्वात्तस्मात्क्लेशयते चिरम्॥ १५॥

अथ विषलिप्तशस्त्रक्षतस्य लक्षणमाह—

सद्यः क्षतं पच्यते यस्य जन्तोः स्रवेद्रक्तं पच्यते चाप्यभीक्ष्णम्।
कृष्णीभूतं क्लिन्नमत्यर्थपूति क्षतान्मांसं शीर्यते यस्य वाऽपि॥ १६॥
तृष्णातापौ दाहमूर्च्छे च यस्य दिग्धं विद्धं तं मनुष्यं व्यवस्येत्।
लिङ्गान्येतान्येव कुर्याद्मित्रैर्दत्तः क्ष्वेडो वा व्रणे यस्य चापि॥ १७॥

*पच्यते चाप्यभीक्ष्णं=पुनःपुनः पाकमेति। तापः-बहिः स्थितः। दाहोऽभ्यन्तरे। कुर्यादित्यत्र "क्षतं" कर्तृपदं बोद्धव्यम्॥ १६-१७॥

अथ विषदातृलक्षणमाह—

इङ्गितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः।
जानीयाद्विषदातारमेभिर्लिङ्गैश्च बुद्धिमान्॥ १८॥
न ददात्युत्तरं पृष्टो विवक्षुर्मोहमेति च।
अपार्थं बहु सङ्कीर्णं भाषते चापि मूढवत्॥१९॥
अङ्गुलीः स्फोटयेदुर्वीं विलिखेत्प्रहसेदपि।
वेपथुश्चास्य भवति त्रस्तश्चैकैकमीक्षते॥ २०॥
विवर्णवक्त्रो ध्यामश्च नखैः किञ्चिच्छिनत्ति च।
आलभेतासकृद्दीनः करेण च शिरोरुहान्॥ २१॥
निर्यियासुरपद्वारैर्वीक्षते च पुनःपुनः।
वर्त्तते विपरीतं च विषदाता विचेतनः॥ २२॥

*प्रायेण राजादीनामन्नादौ शत्रवो विषं ददति, तेषां ज्ञानार्थं लक्षणमाह—इङ्गितज्ञ इति। इङ्गितम्=अभिप्रायसूचकमाकारम्।

मुखवैकृतं=मुखवैवर्ण्यादि । एभिर्लिङ्गैर्वक्ष्यमाणैः । न ददात्युत्तरं· पृष्टः—स्वीयासत्कर्मजनितव्यामोहात् । संकीर्णम्—अस्फुटम् । भयज· नितपर्वव्यथाऽपनोदनायाङ्गुलीः स्फोटयेत् । प्रहसेदहेतावपि । श्यामः =दग्धसमानवर्णः । आलभेत=स्पृशेत् । विपरीतं यथा स्यादेवं· वर्त्तते ॥ १८-२२ ॥

अथ जङ्गमविषस्य सामान्यकार्याण्याह—

निद्रां तन्द्रां क्लमं दाहं सम्पाकं लोमहर्षणम् ।
शोथं चैवातिसारं च कुरुते जङ्गमं विषम् ॥ २३ ॥

अथ सर्पानाह—

वातपित्तकफात्मानो भोगिमण्डलिराजिलाः ।
यथाक्रमं समाख्याता द्व्यन्तरा द्वन्द्वरूपिणः ॥ २४ ॥
फणिनो भोगिनो ज्ञेयाः संख्यातास्तेऽत्र विंशतिः ।
मण्डलैर्विविधैश्चित्राः पृथवो मन्दगामिनः ।
षट् ते मण्डलिनो ज्ञेया ज्वलनार्कविषाः स्मृताः ॥ २५ ॥
स्निग्धा विविधवर्णाभिस्तिर्यगूर्ध्वश्च राजिभिः ।
विचित्रा इव ये भान्ति राजिलास्ते हि तेऽपि षट् ॥२६॥

*जङ्गमेषु तीक्ष्णतरत्वादादौ तदाश्रयसर्पानाह— वातेति । एते यथाक्रमं वातपित्तकफात्मानो बोध्याः । द्व्यन्तराः=द्वे अन्तरे=भेदौ येषां ते द्व्यन्तराः । यथा भोगिनो मण्डलिन्यां जाता इत्यादि ॥२४-२६॥

अथ भोगिसर्पादिकृतदंशलक्षणभेदमाह—

दंशो भोगिकृतः कृष्णः सर्ववातविकारकृत् ।
पीतो मण्डलिनः शोथो मृदुः पित्तविकारवान् ॥ २७ ॥
राजिलोत्थो भवेद्दंशः स्थिरशोथश्च पिच्छिलः ।
पाण्डुः स्निग्धोऽतिसान्द्रासृक्सर्वश्लेष्मविकारवान् ॥ २८ ॥

अथ देशविशेषे कालविशेषे च दष्टस्यासाध्यत्वमाह—

अश्वत्थदेवायतनश्मशानवल्मीकसन्ध्यासु चतुष्पथेषु ।
याम्ये च पित्र्ये परिवर्जनीया ऋक्षे नरा मर्मसु ये च दष्टाः ॥२९॥

*याम्ये=भरण्याम् । पित्र्ये=मघायाम् ॥ २९ ॥

अथ दर्वीकरजातिसर्पाणां विषकृत्यमाह—

दर्वीकराणां विषमाशु हन्ति मेघानिलोष्णे द्विगुणीभवन्ति ॥३०॥

*उष्णे=उष्णसंयोगे ॥ ३० ॥

अथ दर्वीकरलक्षणमाह—

रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः।
ज्ञेया दर्वीकराः सर्पाः फणिनः शीघ्रगामिनः ॥ ३१ ॥

अथ येषु विषमाशु मारकं भवति तानाह—

अजीर्णपित्तातपपीडितेषु वालेषु वृद्धेषु वुभुक्षितेषु।
क्षीणे क्षते मेहिनि कुष्ठजुष्टे रूक्षेऽवले गर्भवतीषु चापि ॥ ३२ ॥

अथ विषाभिभूतस्यासाध्यलक्षणान्याह—

शस्त्रक्षते यस्य न रक्तमस्ति राज्यो लताभिश्च न सम्भवन्ति।
शीताभिरद्भिश्च न रोमहर्षो विषाभिभूतं परिवर्जयेत्तम् ॥ ३३ ॥
जिह्मं मुखं यस्य च केशशातो नासाऽवसादश्च सकण्ठभङ्गः।
कृष्णश्च रक्तः श्वयथुश्च दंशे हन्वोः स्थिरत्वञ्च विवर्जनीयः ॥३४॥

*केशशातः—आकर्षणात्। नासाऽवसादः=नासाया नतत्वम्। कण्ठभङ्गः=ग्रीवाधारणाऽशक्तिः। हन्वोः स्थिरत्वं=हनुद्वय-स्तम्भः ॥ ३३-३४ ॥

अपरञ्च—

वान्तिर्घना यस्य निरेति वक्त्राद्रक्तं स्रवेदूर्ध्वमधश्च यस्य।
दंष्ट्रानिपातांश्चतुरश्च पश्येद्यस्यापि वैद्यैः परिवर्जनीयः ॥३५॥

*रक्तं स्रवेदूर्ध्वमधश्च यस्य=यस्य च नासामुखलिङ्गगुदादि-भ्यो रक्तं स्रवेत् ॥ ३५ ॥

उन्मत्तमत्यर्थमुपद्रुतं वा हीनस्वरं वाऽप्यथ वा विवर्णम्।
सारिष्टमत्यर्थमवेगिनञ्च जह्यान्नरं तत्र न कर्म कुर्यात् ॥ ३६ ॥

*अत्यर्थमुपद्रुतं वा=ज्वरातिसारादिभिरतिशयेनोपद्रुतम्। हीन-स्वरं=वक्तुमक्षमम्। विवर्णं=कृष्णवर्णम्। सारिष्टं=नासाभङ्गादि-युक्तम्। अवेगिनं=वेगो=विषवेगः, "लहरि"इति लोके, तद्र-हितम् ॥ ३६ ॥

अथ दूषीविषलक्षणमाह—

जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा।
स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति॥ ३७॥

*स्थावरं जङ्गमं च विषमेव जीर्णत्वादिभिः कारणैर्दूषीविषसंज्ञां लभते। तदाह—जीर्णमिति। जीर्णम्=अतिपुराणम्। विषघ्नौषधिभिर्हतं=विषघ्नीभिरौषधीभिर्वीर्यहानिकृतम्। स्वभावतो वा गुणविप्रहीनं=स्वभावादेव दशानां गुणानां मध्ये एकद्वित्र्यादिगुणहीनम्॥३७॥

अथ दूषीविषकार्यमाह—

वीर्याल्पभावान्न निपातयेत्तत्कफान्वितं वर्षगणानुबन्धि।
तेनार्दितो भिन्नपुरीषवर्णो विगन्धिवैरस्ययुतः पिपासी।
मूर्च्छां भ्रमं गद्गदवाग्वमिञ्च विचेष्टमानोऽरतिमाप्नुयाद्वा॥३८॥

*न निपातयेद्=न मारयेत्। कफान्वितं=कफेन मन्दीकृतोष्णयादिगुणम्। वर्षगणानुबन्धि=कफेनाग्नेर्मान्द्यादित्वादपाकाच्चिरस्थायि। तथा दूषीविषजदद्रुरोगवर्ती भिन्नपुरीषवर्णः=भिन्नपुरीषः=उद्गतमलः, भिन्नवर्णः=विवर्णः। विचेष्टमानः=विरुद्धां चेष्टां कुर्वन्, मूर्च्छाऽऽदीन्व्याधील्लँभते॥ ३८॥

अथ स्थानविशेषोत्थितदूषीविषलक्षणविशेषमाह—

आमाशयस्थे कफवातरोगी पक्वाशयस्थेऽनिलपित्तरोगी।
भवेत्समुद्ध्वस्तशिरोऽङ्गरुट्को विलूनपक्षश्च यथा विहङ्गः॥ ३९॥

*समुद्ध्वस्तशिरोऽङ्गरुट्कः=समुद्ध्वस्ताः शिरोरुहाः=केशाः, अङ्गरुहाणि=लोमानि यस्य सः। एतदपि लिङ्गं पक्वाशयस्थे दूषीविषे बोद्धव्यम्॥ ३९॥

स्थितं रसादिष्वथ तद्यथोक्तान्करोति धातुप्रभवान्विकारान्॥ ४०॥

*तत्र दूषीविषे। यथोक्तान्=सुश्रुते व्याधिसमुद्देशीयोक्तान्॥४०

अथ दूषीविषस्य प्रकोपसमयमाह—

कोपं तु शीतानिलदुर्दिनेषु यात्याशु पूर्वं शृणु तस्य रूपम्॥ ४१॥

अथ प्रकुपितदूषीविषस्य पूर्वरूपमाह—

निद्रा गुरुत्वञ्च विजृम्भणञ्च विश्लेषहर्षावथवाऽङ्गमर्दः॥४२॥

*विश्लेषः=गात्रशैथिल्यम्। हर्षः=रोमाञ्चः॥ ४२॥

अथ प्रकुपितदूषीविषरूपमाह—

ततः करोत्यन्नमदाविपाकावरोचकं मण्डलकोठजन्म ।
मांसक्षयं पाणिपदे प्रशोथं मूर्च्छां तथा च्छर्दिमथातिसारम् ।
दूषीविषं श्वासतृषाज्वरांश्च कुर्यात्प्रवृद्धिं जठरस्य चापि ॥ ४३ ॥

*अन्ने भुक्ते पूगफलेनेव मदः । अविपाकः—अन्नस्य ॥ ४३ ॥

अथ दूषीविषभेदेन विकारभेदानाह—

उन्मादमन्यज्जनयेत्तथाऽन्यदानाहमन्यत्क्षपयेच्च शुक्रम् ।
गाद्गद्यमन्यज्जनयेच्च कुष्ठं तांस्तान्विकारांश्च बहुप्रकारान् ॥ ४४ ॥

*अन्यद्—दूषीविषम् । तांस्तान्विकारान्—विसर्पविस्फोटादीन् ॥ ४४ ॥

अथ दूषीविषशब्दस्य निरुक्तिमाह—

दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः ।
यस्मात्सन्दूषयेद्धातूंस्तस्माद् दूषीविषं स्मृतम् ॥ ४५ ॥

*देशः=आनूपादिः । कालो=दुर्दिनादिः । अन्नं=कुलत्थतिल-मसूरादि । धातुदूषकत्वाद् दूषीविषम् ॥ ४५ ॥

अथ दूषीविषस्य साध्यत्वादिकमाह—

साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम् ।
दूषीविषमसाध्यं स्यात्क्षीणस्याहितसेविनः ॥ ४६ ॥

अथ कृत्रिमविषलक्षणमाह—

सौभाग्यार्थं स्त्रियः स्वेदं रजो नानाऽङ्गजान्मलान् ।
शत्रुप्रयुक्तांश्च गरान्प्रयच्छन्त्यन्नमिश्रितान् ॥ ४७ ॥

*कृत्रिमं विषं द्विविधम् । एकं सविषं दूषीविषसंज्ञम्, अपरमविषं तदेव गरसंज्ञम् । तथा च काश्यपसंहितायाम्—

*"संयोगजश्च द्विविधं द्वितीयं विषमुच्यते ।
दूषीविषं तु सविषमविषं गर उच्यते ॥ १ ॥"

*संयोगजं=कृत्रिमं विषं, द्वितीयं=स्वाभाविकं, तच्च द्विविधम् । तत्र दूषीविषमभिधाय गरं दर्शयितुमाह—सौभाग्यार्थमिति ॥ ४७ ॥

अथ गरकार्यमाह—

तैः स्यात्पाण्डुः कृशोऽल्पाग्निर्गरश्चास्योपजायते ।
मर्मप्रधमनाध्मानं हस्तयोः शोथसम्भवः ॥ ४८ ॥

जठरं ग्रहणीदोषो यक्ष्मगुल्मक्षयज्वराः ।
एवं विधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत् ॥ ४९ ॥

*तैः=गरैः, स्वेदरजःप्रभृतिभिः । गरश्चास्योपजायत इति—अपाकात् । मर्मप्रथमनं=मर्मव्यथा । क्षयो=धातुक्षयः ॥ ४८-४९ ॥

अथ लूतानामकजन्तोरुत्पत्ति निरुक्ति सङ्ख्यां चाह—

यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदबिन्दवः ।
तेभ्यो जातास्तथा लूता इति ख्यातास्तु षोडश ॥ ५० ॥

तथा चात्र सुश्रुतः—

विश्वामित्रो नृपवरः कदा चिद्दृषिसत्तमम् ।
वसिष्ठं कोपयामास गत्वाऽऽश्रमपदं किल ॥ ५१ ॥
कुपितस्य मुनेस्तस्य ललाटात्स्वेदबिन्दवः ।
अपतन्दर्शनादेव ह्यधस्तात्तीव्रवर्चसः ॥ ५२ ॥
लूने तृणे महर्षेस्तु धेन्वर्थे सम्भृतेऽपि च ।
ततो जातास्त्विमे घोरा नानारूपा महाविषाः ॥ ५३ ॥
तासामष्टौ कष्टसाध्या वर्ज्यास्तावत्य एव हि ॥ ५४ ॥

*तत्र त्रिमण्डलप्रभृतयोऽष्टौ कष्टसाध्याः, सौवर्णिकप्रभृतयोऽष्टावसाध्याः ॥ ५४ ॥

अथ तासां सामान्यानां दंशलक्षणमाह—

ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च ।
ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः ॥ ५५ ॥
पिडका विविधाकारा मण्डलानि महान्ति च ।
शोथा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा ।
सामान्यं सर्वलूतानामेतद्द् दंशस्य लक्षणम् ॥ ५६ ॥

*दंशकोथः=दंशमध्ये पूतिभावः ॥ ५५-५६ ॥

दंशमध्ये तु यत्कृष्णं श्यावं वा जालकावृतम् ।
दग्धाकृति भृशं पाकक्लेदशोथज्वरान्वितम् ।
दूषीविषाभिर्लूताभिस्तद्दष्टमिति निर्दिशेत् ॥ ५७ ॥

अथासाध्यसौवर्णकाषष्ठलूतानां दंशलक्षणमाह—

शोथः श्वेताः सिता रक्ताः पीता वा पिडका ज्वरः।
प्राणान्तकाश्च जायन्ते दाहहिक्काशिरोग्रहाः॥ ५८॥

अथ मूषकविषलक्षणमाह—

आ दंशाच्छोणितं पाण्डुमण्डलानि ज्वरोऽरुचिः।
लोमहर्षश्च दाहश्चाप्याखुदूषीविषार्दिते॥ ५९॥

अथ प्राणहरमूषकविषकार्यमाह—

मूर्च्छाऽङ्गशोथवैवर्ण्यं क्लेदो मन्दश्रुतिर्ज्वरः।
शिरोगुरुत्वं लालाऽसृक्छर्दिश्चासाध्यमूषकात्॥ ६०॥

*अङ्गशोथोऽत्र मूषकाकारो बोद्धव्य इति तन्त्रान्तरे॥ ६०॥

अथ कृकलासदष्टस्य लक्षणमाह—

शोथस्य कार्ष्ण्यमथवा नानावर्णत्वमेव च।
मोहोऽथ वर्चसो भेदो दष्टस्य कृकलासकैः॥ ६१॥

अथ वृश्चिकविषलक्षणमाह—

दहत्यग्निरिवादौ तु भिनत्त्वीवोर्ध्वमाशु च।
वृश्चिकस्य विषं याति पश्चाद् दंशेऽवतिष्ठते॥ ६२॥

अथासाध्यवृश्चिकदष्टस्य लक्षणमाह—

दष्टोऽसाध्यैस्तु हृद्घ्राणरसनोपहतो नरः।
मांसैः पतद्भिरत्यर्थं वेदनाऽऽर्त्तो जहात्यसून्॥ ६३॥

*असाध्यैर्वृश्चिकैस्तेषामेवानुवृत्तेः। हृदादिषूपहतः=हृदादिकार्यरहितो भवति, अत्यर्थं वेदनाऽऽर्त्त इत्यन्वयः॥ ६३॥

अथ कणभकृमिदष्टस्य लक्षणमाह—

विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि वा।
लक्षणं कणभैर्दष्टे दंशश्चैव विशीर्यते॥ ६४॥

*कणभः=कीटविशेषः॥ ६४॥

अथोच्चिटिङ्गदष्टस्य लक्षणमाह—

कृष्णलोमोच्चिटिङ्गेन स्वस्तलिङ्गो भृशार्त्तिमान्।
दष्टः शीतोदकेनेव सिक्तान्यङ्गानि मन्यते॥ ६५॥

*कृष्णलोमा = अधिकतरकृष्णरोमा । उच्चिटिङ्गः = "चींटा" कीटविशेषः ॥ ६५ ॥

अथ सविषमण्डूकदष्टस्य लक्षणमाह—

एकदंष्ट्राऽर्दितः शूनः सरुजः पीतकः सतृट् ।
सनिद्रश्छर्दिमान्दष्टो मण्डूकैः सविषैर्भवेत् ॥ ६६ ॥

*एकदंष्ट्राऽर्दितः = स्वभावादेकयैव दंष्ट्रया दष्टो भवति ॥ ६६ ॥

अथ मत्स्यविषस्य लक्षणमाह—

मत्स्यास्तु सविषाः कुर्युर्दाहं शोथं रुजं तथा ॥ ६७ ॥

अथ जलौकाविषकार्यमाह—

कण्डूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः ॥६८॥

*कुर्युरिति शेषः ॥ ६८ ॥

अथ गृहगोधिकाविषकार्यमाह—

विदाहं श्वयथुं तोदं प्रस्वेदं गृहगोधिकाः ॥ ६९ ॥

*कुर्युरिति शेषः ॥ ६९ ॥

अथ शतपदीविषकार्यमाह—

दंशे स्वेदं रुजं दाहं कुर्याच्छतपदीविषम् ॥ ७० ॥

*शतपदी = गिजाई" इति लोके ॥ ७० ॥

अथ मशकविषकार्यमाह—

कण्डूमान्मशकैरीषच्छोथः स्यान्मन्दवेदनः ॥ ७१ ॥

अथासाध्यमशकदंशलक्षणमाह—

असाध्यकीटसदृशमसाध्यं मशकक्षतम् ॥ ७२ ॥

*असाध्यकीटसदृशम् = असाध्यैः कीटैर्लूताऽऽदिभिः कृतं यत्क्षतं तत्सदृशवेदनम् ॥ ७२ ॥

अथ मक्षिकादंशलक्षणमाह—

सद्यः संस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता ।
पिडका मक्षिकादंशे तासान्तु स्थगिकाऽसुहृत् ॥ ७३ ॥

*तासामित्यादि । तासां = सुश्रुतोक्तानां षण्णां मक्षिकाणां मध्ये "स्थगिका"नाम्नी शीघ्रं प्राणान्हरतीत्यर्थः ॥ ७३ ॥

अथ व्याघ्रादिविषकार्यमाह—

चतुष्पाद्भिर्द्विपाद्भिर्वा नखैर्दन्तैश्च यत्कृतम् ।

शूयते पच्यते तच्च स्रवति ज्वरयत्यपि ॥ ७४ ॥

*चतुष्पाद्भिः=व्याघ्रादिभिः । द्विपाद्भिः=वनमनुष्यादिभिः । शूयते=शूनं भवति ॥ ७४ ॥

अथ विषोज्झितस्य लक्षणमाह—

प्रसन्नदोषं प्रकृतिस्थधातुमन्नाभिकामं सममूत्रविट्कम् ।
प्रसन्नवर्णेन्द्रियचित्तचेष्टं वैद्योऽवगच्छेदविषं मनुष्यम् ॥ ७५ ॥

*प्रसन्नदोषं=प्रकृतिस्थदोषम् । शेषं सुगमम् ॥ ७५ ॥

## अथ विषचिकित्सा ।

तत्र प्रथमं स्थावरविषघ्नोपायानाह—

स्थावरेण विषेणार्त्तं नरं यत्नेन वामयेत् ।
वमनेन समं नास्ति यतस्तस्य चिकित्सितम् ॥
विषमत्यर्थमुष्णञ्च तीक्ष्णं च कथितं यतः ।
अतः सर्वविषेषूक्तः परिषेकस्तु शीतलः ॥
औष्ण्यात्तैक्ष्ण्याद्विशेषेण विषं पित्तं प्रकोपयेत् ।
वमितं सेचयेत्तस्माच्छीतलेन जलेन च ॥
पाययेन्मधुसर्पिर्भ्यां विषघ्नं भेषजं द्रुतम् ।
भोक्तुमम्लं रसं दद्याद्धर्षयेन्मरिचानि च ॥ ७६ ॥
यस्य यस्य च दोषस्य पश्येल्लिङ्गानि भूरिशः ।
तस्य तस्यौषधैः कुर्याद्विपरीतगुणैः क्रियाम् ॥ ७७ ॥
शालयः षष्टिकाश्चैव कोरदूषाः प्रियङ्गवः ।
भोजनार्थं विषार्त्तानामूर्ध्वञ्चाधश्च शोधनम् ॥ ७८ ॥

*प्रियङ्गुः=कङ्गुः ॥ ७८ ॥

मूलत्वक्पत्रपुष्पाणि बीजं चेति शिरीषतः ।
गवां मूत्रेण सम्पिष्टं लेपाद्विषहरं परम् ॥ ७९ ॥
दूषीविषार्त्तं सुस्निग्धमूर्ध्वञ्चाधश्च शोधनम् ।
पाययेदगदं मुख्यमिदं दूषीविषापहम् ॥ ८० ॥
पिप्पली ध्यामकं मांसी लोध्रमेला सुवर्चिका ।
मरिचं वालकञ्चैला तथा कनकगैरिकम् ।

क्षौद्रयुक्तः कषायोऽयं दूषीविषमपोहति ॥ ८१ ॥

*ध्यामकं=रोहिषं, तदलाभे "उशीरं" देयम् । कनकगैरिकम्=अत्यन्तमारक्तं गैरिकं "सोनागेरू" इति लोके ॥ ८१ ॥

अथ जङ्गमविषचिकित्सा ।

तत्र मृत्युपाशच्छेदिघृतमाह—

अभयां रोचनां कुष्ठमर्कपत्रं तथोत्पलम् ।
नलवेतसमूलानि गरलं सुरसां तथा ॥ ८२ ॥
सकलिङ्गां समञ्जिष्ठामनन्ताञ्च शतावरीम् ।
शृङ्गाटकं समङ्गां च पद्मकेशरमित्यपि ॥ ८३ ॥
कल्कीकृत्य पचेत्सर्पिः पयो दद्याच्चतुर्गुणम् ।
सम्यक्पक्वेऽवतीर्णे च शीते तस्मिन्विनिक्षिपेत् ॥ ८४ ॥
सर्पिस्तुल्यं भिषक्क्षौद्रं कृतरक्षं निधापयेत् ।
विषाणि हन्ति दुर्गाणि गरदोषकृतानि च ॥ ८५ ॥
स्पर्शाद्धन्ति विषं सर्वं गरैरुपहतां त्वचम् ।
योगजं तमकं कण्डूं मांससादं त्रिसंज्ञताम् ॥ ८६ ॥
नाशयत्यञ्जनाभ्यङ्गपानवस्तिषु योजितम् ।
सर्पकीटाखुलूनाऽऽदिदष्टानां विषहृत्परम् ॥ ८७ ॥

इति मृत्युपाशच्छेदिघृतम् ।

धत्तूरस्य शिफा पेया क्षीरेण परिपेषिता ।
अङ्कोटवंशजा चापि श्वविषघ्नी प्रयत्नतः ॥ ८८ ॥
रजनीयुग्मपत्तङ्गमञ्जिष्ठानागकेशरैः ।
शीताम्बुपिष्टैरालेपः सद्यो लूतां विनाशयेत् ॥ ८९ ॥
जीरकस्य कृतः कल्को घृतसैन्धवसंयुतः ।
सुखोष्णो मधुना लेपो वृश्चिकस्य विषं हरेत् ॥ ९० ॥
गन्धमाघ्राय मृदितं सूर्यावर्त्तदलस्य तु ।
वृश्चिकेन नरो विद्धः क्षणाद्भवति निर्विषः ॥ ९१ ॥

इति षट्षष्टितमो विषाधिकारः समाप्तः ॥ ६६ ॥

अथ स्त्रीरोगाणामधिकाराः।

## तत्र सप्तषष्टितमः स्त्रीरोगाधिकारः॥ ६७॥

अथ प्रदररोगस्य विप्रकृष्टनिदानं सङ्ख्यं चाह—

विरुद्धमद्याध्यशनादजीर्णाद्गर्भप्रपातादतिमैथुनाच्च।
यानाध्वशोकादतिकर्षणाच्च भाराभिघाताच्छयनाद्दिवा च॥ १॥
तं श्लेष्मपित्तानिलसन्निपातैश्चतुष्प्रकारं प्रदरं वदन्ति॥ २॥

*अत्र वातपित्तयोरादौ श्लेष्मणोऽभिधानं श्लैष्मिकेऽतिप्रवृत्तिबोधनार्थम्॥ २॥

अथ प्रदरस्य सामान्यलक्षणमाह—

असृग्दरं भवेत्सर्वं साङ्गमर्दं सवेदनम्॥ ३॥

*असृग्दरम् = असृग्दीर्यते = च्यवतेऽस्मिन्नित्यसृग्दरम्, अच्प्रत्ययान्तम्। सवेदनं = सशूलम्॥ ३॥

अथ कफजप्रदरलक्षणमाह—

आमं सपिच्छाप्रतिमं सपाण्डु पुलाकतोयप्रतिमं कफात्तु॥ ४॥

*आमम् = अपक्वरसयुक्तम्। सपिच्छाप्रतिमं = पिच्छा = शाल्मल्यादिनिर्यासस्तत्तुल्यं, पिच्छिलमित्यर्थः। सपाण्डु = सहशब्दोऽत्रेषदर्थः, तेनेषत्पाण्डु। पुलाकतोयप्रतिमं कफात्तु = पुलाकः = तुच्छधान्यं, तद्धावनतोयतुल्यमित्यर्थः। रुधिरं स्रवेदित्यर्थः॥ ४॥

अथ पित्तजप्रदरलक्षणमाह—

सपीतनीलासितरक्तमुष्णं पित्तार्त्तियुक्तं भृशवेगि पित्तात्॥ ५॥

*सपीतनीलासितरक्तम् = पीतादिवर्णयुक्तम्। पित्तार्तियुक्तं = दाहादियुक्तम्। भृशवेगि = वारंवारं प्रवृत्तियुक्तम्॥ ५॥

अथ वातजप्रदरलक्षणमाह—

रूक्षारुणं फेनिलमल्पमल्पं वातात्सतोदं पिशितोदकाभम्॥ ६॥

*पिशितोदकाभं = मांसधावनतोयाभम्॥ ६॥

अथ त्रिदोषजप्रदरलक्षणमाह—

सक्षौद्रसर्पिर्हरितालवर्णं मज्जप्रकाशं कुणपं त्रिदोषम्।
तच्चाप्यसाध्यं प्रवदन्ति तज्ज्ञा न तत्र कुर्वीत भिषक्चिकित्साम्॥ ७॥

*सक्षौद्रसर्पिः = क्षौद्रादिवर्णसहितम्। कुणपं = शवगन्धि॥ ७॥

अथात्यन्तरुधिरनिःसरणोपद्रवानाह—

तस्यातिवृत्तौ दौर्बल्यं भ्रमो मूर्च्छा मदस्तृषा ।
दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः ॥ ८ ॥

*वातजा रोगाः=आक्षेपकादयः ॥ ८ ॥

अथ साध्यप्रदररोगिणीलक्षणमाह—

शश्वत्स्रवन्तीमास्रावं तृष्णादाहज्वरान्विताम् ।
दुर्बलां क्षीणरक्ताञ्च तामसाध्यां विवर्जयेत् ॥ ९ ॥

अथ चिकित्सानिवृत्त्यर्थं शुद्धार्त्तवलक्षणमाह—

मासान्निष्पिच्छदाहार्त्ति पञ्चरात्रानुबन्धि च ।
नैवातिबहु नात्यल्पमार्त्तवं शुद्धमादिशेत् ॥ १० ॥

*निष्पिच्छदाहार्त्ति=अपिच्छिलमदाहमशूलम्, एतेन विकृतवातादिलक्षणरहितमित्यर्थः । पञ्चरात्रानुबन्धि=प्रभूतप्रवृत्त्या त्रिरात्रानुबन्धि, ततो मध्यमप्रवृत्त्या पञ्चरात्रानुबन्धि, ततः परं कस्याश्चिच्चेत्स्रवति, तदा स्वल्पप्रवृत्त्या षोडशदिनानि यावत्तदपि शुद्धमेव ॥ १० ॥

अथ प्रदरचिकित्सामाह—

दध्ना सौवर्चलं जाजी मधुकं नीलमुत्पलम् ।
पिबेत्क्षौद्रयुतं नारी वातासृग्दरशान्तये ॥ ११ ॥

*सौहार-जीरा-यष्टीमधु-नीलकमलपुष्पाण्येषां प्रत्येकं माषद्वयं, सर्वमेकीकृत्य दध्ना कर्षचतुष्टयेन पिष्ट्वा तत्र माषाष्टकं मधु क्षिप्त्वा पिबेत्॥११॥

मधुकं कर्षमेकं तु कर्षैकाञ्च सितां तथा ।
तण्डुलोदकसम्पिष्टां लोहिते प्रदरे पिबेत् ॥
बला कङ्कतिकाऽऽख्या या तस्या मूलं सुचूर्णितम् ।
लोहितप्रदरे खादेच्छर्करामधुसंयुतम् ॥
शुचिस्थाने व्याघ्रनख्या मूलमुत्तरदिग्भवम् ।
नीतमुत्तरफल्गुन्यां कटिबद्धं हरेदसृक् ॥ १२ ॥

*व्याघ्रनखी "वघनखी" इति लोके ॥ १२ ॥

रसाञ्जनं तण्डुलकस्य मूलं क्षौद्रान्वितं तण्डुलतोयपीतम् ।
असृग्दरं सर्वभवं निहन्ति श्वासञ्च भार्गी सह नागरेण ॥ १३ ॥

*तण्डुलकस्य=तण्डुलीयकस्य ॥ १३ ॥

अशोकवल्कलक्वाथशृतं दुग्धं सुशीतलम् ।
यथाबलं पिबेत्प्रातस्तीव्रासृग्दरनाशनम् ॥ १४ ॥

*अशोकवल्कलपलं द्वात्रिंशत्पलसम्मितेन जलेन निष्क्वाथ्य शेषं र-
क्षेत्पलाष्टकं क्वाथं, तेन क्वाथेन सह क्षीरं पलाष्टकमितं विपचेत्तत्र
दुग्धावशेषः कर्त्तव्यः, तन्मध्ये पलचतुष्टयमितं दुग्धं पेयं वह्निबला-
पेक्षया ॥ १४ ॥

कुशमूलं समुद्धृत्य पेषयेत्तण्डुलाम्बुना ।
एतत्पीत्वा त्र्यहं नारी प्रदरात्परिमुच्यते ॥ १५ ॥
क्षौद्रयुक्तं फलरसमौदुम्बरभवं पिबेत् ।
असृग्दरविनाशाय सशर्करपयोऽन्नभुक् ॥ १६ ॥

*अन्नम्=ओदनम् ॥ १६ ॥

अलाबुफलचूर्णस्य शर्करासहितस्य च ।
मधुना मोदकं कृत्वा खादेत्प्रदरशान्तये ॥ १७ ॥

अथ दार्व्यादिक्वाथमाह—

दार्वीरसाञ्जनकिरातवृषाब्दबिल्वसक्षौद्रचन्दनदिनेशभवप्रसूनैः ।
क्वाथः कृतो मधुयुतो विधिना निपीतो रक्तं सितञ्च सरुजं प्रदरं निहन्ति ।
रक्तपित्ताधिकारोक्तं हितं कूष्माण्डखण्डकम् ॥ १८ ॥

इति सप्तषष्टितमः प्रदराधिकारः समाप्तः ॥ ६७ ॥

---

# अथाष्टषष्टितमः सोमरोगाधिकारः ॥ ६८ ॥

तत्र सोमरोगस्य निदानपूर्विकां सम्प्राप्तिमाह—

स्त्रीणामतिप्रसङ्गेन शोकाच्चापि श्रमादपि ।
आभिचारिकयोगाद्वा गरयोगात्तथैव च ॥ १ ॥
आपः सर्वशरीरस्थाः क्षुभ्यन्ति प्रस्रवन्ति च ।
तस्यास्ताः प्रच्युताः स्थानान्मूत्रमार्गं व्रजन्ति हि ॥ २ ॥

अथ सोमरोगलक्षणमाह—

प्रसन्ना विमलाः शीता निर्गन्धा नीरुजाः सिताः ।

स्रवन्ति चातिमात्रं ताः सा न शक्नोति दुर्बला ॥ ३ ॥
वेगं धारयितुं तासां न विदन्ति सुखं क चित् ।
शिरःशिथिलता तस्या मुखं तालु च शुष्यति ॥ ४ ॥
मूर्च्छा जृम्भा प्रलापश्च त्वग्रूक्षा चातिमात्रतः ।
भक्ष्यैर्भोज्यैश्च पेयैश्च न तृप्तिं लभते सदा ॥ ५ ॥
सन्धारणाच्छरीरस्य ता आपः सोमसंज्ञिताः ।
ततः सोमक्षयात्स्त्रीणां सोमरोग इति स्मृतः ॥ ६ ॥

अथ सोमरोगचिकित्सामाह—

कदलीनां फलं पक्वं धात्रीफलरसं मधु ।
शर्करासहितं खादेत्सोमधारणमुत्तमम् ॥ ७ ॥
माषचूर्णं समधुकं विदारीं मधुशर्कराम् ।
पयसा पाययेत्प्रातः सोमधारणमुत्तमम् ॥ ८ ॥
स एव सरुजः सोमः स्रवेन्मूत्रेण चेन्मुहुः ।
तत्रैलापत्रचूर्णेन पाययेद्वारुणीं सुराम् ॥ ९ ॥
जलेनामलकीबीजकल्कं समधुशर्करम् ।
पिबेद्दिनत्रयेणैव श्वेतप्रदरनाशनम् ॥ १० ॥
तक्रौदनाहाररता सम्पिबेन्नागकेशरम् ।
त्र्यहं तक्रेण सम्पिष्टं श्वेतप्रदरशान्तये ॥ ११ ॥

अथ सोमरोगे मूत्रातीसारलक्षणमाह—

सोमरोगे चिरं जाते यदा मूत्रमतिस्रवेत् ।
मूत्रातिसारं तं प्राहुर्बलविध्वंसनं परम् ॥ १२ ॥

इत्यष्टषष्टितमः सोमरोगाधिकारः समाप्तः ॥ ६८ ॥

## अथैकोनसप्ततितमो योनिरोगाधिकारः ॥ ६९ ॥

तत्र योनिरोगनिदानमाह—

मिथ्याऽऽहारविहाराभ्यां दुष्टैर्दोषैः प्रदूषितात् ।
आर्त्तवाद्बीजतश्चापि दैवाद्वा स्युर्भगे गदाः ॥ १ ॥

अथ योनिरोगनामान्याह—

उदावर्त्ता तथा वन्ध्या विप्लुता च परिप्लुता ।

वातला योनिजो रोगो वातदोषेण पञ्चधा ॥ २ ॥
पञ्चधा पित्तदोषेण तत्रादौ लोहितक्षरा ।
प्रस्रंसिनी वामनी च पुत्रघ्नी पित्तला तथा ॥ ३ ॥
अत्यानन्दा कर्णिनी च चरणानन्दपूर्विका ।
अतिपूर्वाऽपि सा ज्ञेया श्लेष्मला च कफादिमाः ॥ ४ ॥
षण्डयण्डिनी च महती सूचीवक्त्रा त्रिदोषिणी ।
पञ्चैता योनयः प्रोक्ताः सर्वदोषप्रकोपतः ॥ ५ ॥

अथोक्तविंशतियोनिरोगलक्षणमाह—

सफेनिलमुदावर्त्ता रजः कृच्छ्रेण मुञ्चति ।
वन्ध्या निरार्त्तवा ज्ञेया विप्लुता नित्यवेदना ॥ ६ ॥
परिप्लुतायां भवति ग्राम्यधर्मे रुजा भृशम् ।
वातला कर्कशा स्तब्धा शूलनिस्तोदपीडिता ।
चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः ॥ ७ ॥

*अनिलवेदनाः=तोदादयः, वातलायां त्वतिवातवेदना बोद्धव्याः, वातलेत्यन्वर्थात् ॥ ७ ॥

सदाहं क्षरते रक्तं यस्याः सा लोहितक्षरा ।
प्रस्रंसिनी स्रंसते च क्षोभिता दुष्प्रजायिनी ॥ ८ ॥

*क्षोभिता=विमर्दिता । स्रंसते=स्वस्थानाच्च्यवते । दुष्प्रजायिनी=दुष्टप्रजननशीला ॥ ८ ॥

सवातमुद्गिरेद्बीजं वामनी रजसा युतम् ।
स्थितं हि पातयेद्गर्भं पुत्रघ्नी रक्तसंस्रवात् ॥ ९ ॥

*पुत्रशब्दोऽत्रापत्योपलक्षकः ॥ ९ ॥

अत्यर्थं पित्तला योनिदाहपाकज्वरान्विता ।
चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् ॥ १० ॥
अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण विन्दति ।
कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते ॥ ११ ॥

*कर्णिका=मांसस्य कर्णिकाऽऽकारो ग्रन्थिः ॥ ११ ॥

मैथुने चरणा पूर्वं पुरुषादतिरिच्यते ।

बहुशश्चातिचरणा तयोर्बीजं न तिष्ठति ॥ १२ ॥

*अतिरिच्यते = रजो मुञ्चतीत्यर्थः । बहुशः = वारंवारमतिरिच्यते । तयोः = चरणातिचरणयोः ॥ १२ ॥

श्लेष्मला पिच्छिला योनिः कण्डूयुक्ताऽतिशीतला ।
चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत् ॥ १३ ॥
अनार्त्तवाऽस्तनी षण्डी खरस्पर्शा च मैथुने ।
महामेढ्गृहीताया बालायास्त्वण्डिनी भवेत् ॥ १४ ॥

*अस्तनी = ईषत् स्तनौ यस्याः सा, अत्र लक्षणया षण्डी । महामेढ्ः पुरुषस्तेन गृहीतायाः, बालायाः, सूक्ष्मयोनिच्छिद्रायाः अण्डिनी = अण्डवल्लम्बमाना योनिर्भवति ॥ १४ ॥

अथ विवृतां सूचीवक्त्रां चाह—

विवृताऽतिमहायोनिः सूचीवक्त्राऽतिसंवृता ॥ १५ ॥

अथ त्रिदोषजामाह—

सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा ।
चतसृष्वपि चाद्यासु सर्वलिङ्गनिदर्शनम् ॥ १६ ॥

अथासाध्ययोनिरोगानाह—

पञ्चासाध्या भवन्तीह योनयः सर्वदोषजाः ॥ १७ ॥

*पञ्च = षण्डीप्रभृतयः ॥ १७ ॥

अथ योनिकन्दस्य निदानमाह—

दिवास्वप्नादतिक्रोधाद् व्यायामादतिमैथुनात् ।
क्षताच्च नखदन्ताद्यैर्वाताद्याः कुपिता यथा ॥ १८ ॥

*यथास्वनिदानं कुपिता वाताद्याः ॥ १८ ॥

अथ योनिकन्दलक्षणमाह—

पूयशोणितसङ्काशं लकुचाकृतिसन्निभम् ।
जनयन्ति यदा योनौ नाम्ना कन्दः स योनिजः ॥ १९ ॥

*लकुचाकृतिसन्निभं = लकुचाकारम् । गुडकमत्र विशेष्यं बोध्यम् ॥ १९ ॥

अथ वातजादिभेदेन योनिकन्दरूपमाह—

रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्दिशेत् ।

दाहरागज्वरयुतं विद्यात्पित्तात्मकं तु तम् ॥ २० ॥
तिलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम् ।
सर्वलिङ्गसमायुक्तं सन्निपातात्मकं वदेत् ॥ २१ ॥

अथ योनिरोगचिकित्सा ।

तत्र नष्टार्त्तवचिकित्सामाह—

आर्त्तवादर्शने नारी मत्स्यान्सेवेत नित्यशः ।
काञ्जिकं च तिलान्माषानुदश्विच्च तथा दधि ॥ २२ ॥
इक्ष्वाकुबीजदन्तीचपलागुडमदनकिण्वयवशूकैः ।
सस्नुक्क्षीरैर्वर्त्तिर्योनिगता कुसुमसञ्जननी ॥ २३ ॥

*इक्ष्वाकुः=कटुतुम्बी । चपला=पिप्पली । मदना=मयनफलम् । किण्वं=सुराबीजम् ॥ २३ ॥

पातं ज्योतिष्मतीपत्रं स्वर्जिकोग्रासनं त्र्यहम् ।
शीतेन पयसा पिष्टं कुसुमं जनयेद् ध्रुवम् ॥ २४ ॥

*ज्योतिष्मती=कटभी वृक्षविशेषः "करही" इति लोके । अथवा—"उमिजिनी"-"मालकङ्गुनी" इति च । असनम्="असने"ति लोके—"विजयसार" इति च । पयसा=दुग्धेन ॥ २४ ॥

अथ वन्ध्याचिकित्सामाह—

बला सिता सातिबला मधूकं वटस्य शुङ्गं गजकेशरं च ।
एतन्मधुक्षीरघृतैर्निपीतं वन्ध्या सुपुत्रं नियतं प्रसूते ॥ २५ ॥

अश्वगन्धाकषायेण सिद्धं दुग्धं घृतान्वितम् ।
ऋतुस्नाताऽङ्गना प्रातः पीत्वा गर्भं दधाति हि ॥ २६ ॥
पुष्योद्धृतं लक्ष्मणाया मूलं दुग्धेन कन्यया ।
पिष्टं पीत्वा ऋतुस्नाता गर्भं धत्ते न संशयः ॥ २७ ॥
कुरण्टमूलं धातक्याः कुसुमानि वटाङ्कुराः ।
नीलोत्पलं पयोयुक्तमेतद्गर्भप्रदं ध्रुवम् ॥ २८ ॥

*कुरण्टमूलम्=( पीतपुष्पकटसरैया ) ॥ २८ ॥

याऽबला पिबति पार्श्वपिप्पलं जीरकेण सहितं हिताशिनी ।
श्वेतया विशिखपुङ्खया युतं सा सुतं जनयतीह नान्यथा ॥२९।

*पार्श्वपिप्पलं="गजहड" इति लोके। श्वेतपुष्पया शरपुङ्खया सह ॥ २८ ॥

पत्रमेकं पलाशस्य पिष्ट्वा दुग्धेन गर्भिणी।
पीत्वा पुत्रमवाप्नोति वीर्यवन्तं न संशयः ॥ ३० ॥
शूकरशिम्बीमूलं मध्यं वा दधिफलस्य सपयस्कम्।
पीत्वाऽथो भवलिङ्गीबीजं कन्यां न सूते स्त्री ॥ ३१ ॥

*शूकरशिम्बी=( सुअरासेम )। दधिफलं=कपित्थस्तस्य मज्जा। भवलिङ्गी=( पञ्चगुरिया ) ॥ ३१ ॥

पुत्रकमञ्जरिमूलं विष्णुक्रान्तेशलिङ्गिनी सहिता।
एतद्गर्भेऽष्टदिनं पीत्वा कन्यां न सर्वथा सूते ॥ ३२ ॥

*पुत्रमञ्जरी=( पतजिया ) तस्या मूलम्। ईशलिङ्गी="पञ्चगुलिया" इति लोके ॥ ३२ ॥

अथ गर्भानास्थापकयोगानाह—

पिप्पलिविडङ्गटङ्कणसमचूर्णं या पिबेत्पयसा।
ऋतुसमये न हि तस्या गर्भः सञ्जायते क्वापि ॥ ३३ ॥
आरनालपरिपेषितं त्र्यहं या जपाकुसुममत्ति पुष्पिणी।
सत्पुराणगुडमुष्टिसेविनी सन्दधाति न हि गर्भमङ्गना ॥ ३४ ॥

अथ साध्ययोनिरोगाणां सामान्यचिकित्सामाह—

तासु योनिषु चाद्यासु स्नेहादिक्रम इष्यते।
वस्त्यभ्यङ्गपरीषेकप्रलेपपिचुधारणम् ॥ ३५ ॥

*वस्तिरत्रोत्तरवस्तिः। पिचुः "फाहा" इति लोके ॥ ३५ ॥

अथ वातादिजयोनिरोगाणां यथाक्रमं चिकित्सामाह—

नतवार्त्ताकिनीकुष्ठसैन्धवामरदारुभिः।
तिलतैलं पचेन्नारी पिचुमस्य विधारयेत्।
विप्लुतायां सदा योनौ व्यथा तेन प्रशाम्यति ॥ ३६ ॥

*नतं=तगरम्। वार्त्ताकिनी "वरहेटा" इति लोके ॥ ३६ ॥

वातलां कर्कशां स्तब्धामल्पस्पर्शां तथैव च।
कुम्भीस्वेदैरुपचरेदन्तर्वेश्मनि संवृते ॥ ३७ ॥

धारयेद्वा पिचुं योनौ तिलतैलस्य सा सदा ।
पिच्छलानां च योनीनां सेकाऽभ्यङ्गपिचुक्रिया: ॥ ३८ ॥
शीताः पित्तहराः कार्याः स्नेहनार्थं घृतानि च ।
प्रस्रंसिनीं घृताभ्यक्तां क्षीरस्विन्नां प्रवेशयेत् ॥ ३६ ॥
पिधाय वेशवारेण ततो बन्धं समाचरेत् ।
शुण्ठीमरिचकृष्णाभिर्धान्यकाजाजिदाडिमैः ॥ ४० ॥
पिप्पलीमूलसंयुक्तैर्वेशवारः स्मृतो बुधैः ।
धात्रीरसं सितायुक्तं योनिदाहे पिबेत्सदा ॥ ४१ ॥
सूर्यकान्ता भवं मूलं पिबेद्वा तण्डुलाम्बुना ।
योन्यां तु पूयस्राविण्यां शोधनद्रव्यनिर्मितैः ।
सगोमूत्रैः सलवणैः पिण्डैः सम्पूरणं हितम् ॥ ४२ ॥

*शोधनद्रव्याणि = निम्बपत्रादीनि ॥ ४२ ॥

दुर्गन्धां पिच्छिलां वाऽपि चूर्णैः पञ्चकषायजैः ।
पूरयेद्धारयेद्राजवृक्षादिक्वथिताम्बुना ॥ ४३ ॥

*पञ्चकषायाः = वचावासापटोलप्रियङ्गुनिम्बाः । राजवृक्षः "घन-बहेरा" इति लोके ॥ ४३ ॥

पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः ।
वर्त्तिस्तुल्या प्रदेशिन्या योनौ श्लेष्मविशोधिनी ॥ ४४ ॥

*तुल्या प्रदेशिन्या-दैर्घ्येण परिणाहेन च ॥ ४४ ॥

कर्णिन्यां वर्त्तयो देयाः शोधनद्रव्यनिर्मिताः ॥ ४५ ॥
गुडूचीत्रिफलादन्तीक्वथितोदकधारया ।
योनिं प्रक्षालयेत्तेन तत्र कण्डूः प्रशाम्यति ॥ ४६ ॥
मुद्गयूषं सखदिरं पथ्यां जातीफलं तथा ।
निम्बं पूगञ्च संचूर्ण्य वस्त्रपूतं क्षिपेद्भगे ॥ ४७ ॥
योनिर्भवति सङ्कीर्णा न स्रवेच्च जलं ततः ।
कपिकच्छूभवं मूलं क्वाथयेद्विधिना भिषक् ॥ ४८ ॥
योनिः सङ्कीर्णतां याति क्वाथेनानेन धावयेत् ।
जीरकद्वितयं कृष्णा सुषवी सुरभिर्वचा ॥ ४९ ॥

वासकः सैन्धवश्चापि यवक्षारो यवानिका ।
एषां चूर्णं घृते किञ्चिद् भृष्ट्वा खण्डेन मोदकम् ॥ ५० ॥
कृत्वा खादेद्यथावह्नि योनिरोगाद्विमुच्यते ।
मूषककाथसंसिद्धतिलतैलकृतः पिचुः ।
नाशयेद् योनिरोगांस्तान्धृतो योनौ न संशयः ॥ ५१ ॥

अथ त्रिफलाऽऽदिघृतमाह—

त्रिफलां द्वौ सहचरौ गुडूचीं सपुनर्नवाम् ।
शुकनासां हरिद्रे द्वे रास्नां मेदां शतावरीम् ॥ ५२ ॥
कल्कीकृत्य घृतप्रस्थं पचेत्क्षीरे चतुर्गुणे ।
तत्सिद्धं पाययेन्नारीं योनिरोगप्रशान्तये ॥ ५३ ॥

अथ फलघृतमाह—

मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्कराऽबला ।
मेदे पयस्याकाकोल्यौ मूलं चैवाश्वगन्धजम् ॥ ५४ ॥
अजमोदा हरिद्रे द्वे प्रियङ्गुः कटुरोहिणी ।
उत्पलं कुमुदं द्राक्षा काकोल्यौ चन्दनद्वयम् ॥ ५५ ॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ।
शतावरीरसं क्षीरं घृताद्देयं चतुर्गुणम् ॥ ५६ ॥
सर्पिरेतन्नरः पीत्वा स्त्रीषु नित्यं वृषायते ।
पुत्राञ्जनयते वीरान्मेधाऽऽढ्यान्प्रियदर्शनान् ॥ ५७ ॥
या चैवास्थिरगर्भा स्यात्पुत्रं वा जनयेन्मृतम् ।
अल्पायुषं वा जनयेद्या च कन्यां प्रसूयते ॥ ५८ ॥
योनिरोगे रजोदोषे परिस्रावे च शस्यते ।
प्रजावर्धनमायुष्यं सर्वग्रहनिवारणम् ॥ ५९ ॥
नाम्ना फलघृतं ह्येतदश्विभ्यां परिकीर्त्तितम् ।
अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्र चिकित्सकाः ॥ ६० ॥
जीवद्वत्सैकवर्णाया घृतं तत्र प्रयुज्यते ।
आरण्यगोमयेनैव वह्निज्वाला च दीयते ॥ ६१ ॥

*"मेदा-महामेदयोरभावे शतावरी द्विगुणा देया । पयस्याऽत्र

"क्षीरकाकोली",तदुभयालाभे "अश्वगन्धा" द्विगुणा देया। प्रियङ्गुस्थाने केचिद्धिङ्गु पठन्ति। "पयस्याकाकोल्या"वित्युक्त्वा पुनः "काकोल्यौ" इति काकोलीक्षीरकाकोल्योर्द्विगुणार्थम्। एतस्य फलघृतस्य पाठो नानाविधस्तन्त्रेषु। तत्र हिङ्गुवचातगरजीवकर्षभका एवाधिकाः। "जीवकर्षभकयो"रभावे "विदारीकन्दो" द्विगुणो देयः। इति फलघृतं सकलयोनिरोगेषु ॥ ५७-६१ ॥

अथ योनिकन्दस्य चिकित्सामाह—

गैरिकाम्रास्थिजन्तुघ्नरजन्यञ्जनकट्फलाः।
पूरयेद्योनिमेतेषां चूर्णैः क्षौद्रसमन्वितैः ॥ ६२ ॥
त्रिफलायाः कषायेण सक्षौद्रेण च सेवयेत्।
प्रमदा योनिकन्देन व्याधिना परिमुच्यते ॥ ६३ ॥

अथ गर्भिणीरोगचिकित्सामाह—

ह्रीबेरातिविषामुस्तमोचशक्रैः शृतं जलम्।
दद्याद्गर्भे प्रचलिते प्रदरे कुक्षिरुज्यपि ॥ ६४ ॥

*कुक्षिरुग्=उदरव्यथा ॥ ६४ ॥

इति चलितगर्भस्थापने ह्रीबेरादिक्वाथः।

मधुकं चन्दनोशीरसारिवापद्मपत्रकैः।
शर्करामधुसंयुक्तैः कषायो गर्भिणीज्वरे ॥ ६५ ॥
चन्दनं सारिवालोध्रमृद्वीकाशर्कराऽन्वितम्।
क्वाथं कृत्वा प्रदद्याच्च गर्भिणीज्वरशान्तये।
पीतं विश्वमजाक्षीरैर्नाशयेद्विषमज्वरम् ॥ ६६ ॥

*गर्भिण्या इति शेषः ॥ ६६ ॥

आम्रजम्बूत्वचः क्वाथैर्लेहयेल्लाजशक्तुकम्।
अनेनालीढमात्रेण गर्भिणी ग्रहणीं जयेत् ॥ ६७ ॥
ह्रीबेरारलुरक्तचन्दनबलाधान्याकवत्सादनी-
मुस्तोशीरयवासपर्पटविषाक्वाथं पिबेद् गर्भिणी।
नानाव्याधिरुजाऽतिसारगदके रक्तस्रुतौ वा ज्वरे
योगोऽयं मुनिभिः पुरा निगदितः सूत्यामयेऽप्युत्तमः ॥६८॥

अथ गर्भस्रावगर्भपातयोर्निदानं पूर्वरूपं चाह—

ग्राम्यधर्माध्वगमनयानायासप्रपीडनैः ।
ज्वरोपवासोत्पतनप्रहाराजीर्णधावनैः ॥ ६९ ॥
वमनाच्च विरेकाच्च कुन्थनाद् गर्भपातनात् ।
तीक्ष्णधारोष्णकटुकतिक्तरूक्षनिषेवणात् ॥ ७० ॥
वेगाभिघाताद्विषमादासनाच्छयनाद्भयात् ।
गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत् ॥ ७१ ॥

*गर्भपातनाद् = गर्भपातननियमेन गर्भपातनशीलं द्रव्यम् । गर्भस्य स्रावपातयोः पूर्वरूपमाह—"गर्भे पतती"त्यादि । पतति = स्रावेण पातेन वा पतिष्यति ॥ ६९-७१ ॥

अथ स्रावपातयोरवधिमाह—

आ चतुर्थात्ततो मासात्प्रस्रवेद् गर्भविद्रवः ।
ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥ ७२ ॥

*आ चतुर्थाद् मासाद् = चतुर्थमासपर्यन्तं, गर्भस्य विद्रवः = शोणितरूपः, 'गर्भः स्रवति शोणितम्' इति भोजवचनात् । स्थिरशरीरस्य = कठिनशरीस्य ॥ ७२ ॥

अथ गर्भपातस्य निदानं दृष्टान्तं चाह—

गर्भोऽभिघातविषमासनपीडनाद्यैः-
पक्वं द्रुमादिव फलं पतति क्षणेन ॥ ७३ ॥

*यथा वृन्तलग्नं पक्वं फलमभिघातेनाकाले एव पतति, तथा गर्भोऽप्यभिघातादिनाऽकाले पतति ॥ ७३ ॥

अथ गर्भस्रावचिकित्सामाह—

गुर्विण्या गर्भतो रक्तं स्रवेद्यदि मुहुर्मुहुः ।
तन्निरोधाय सा दुग्धमुत्पलादिशृतं पिबेत् ॥ ७४ ॥

अथोत्पलादिगणमाह—

उत्पलं नीलमारक्तं कह्लारं कुमुदं तथा ।
श्वेताम्भोजश्च मधुकमुत्पलादिरयं गणः ॥ ७५ ॥
संशीलितो हरत्येव दाहं तृष्णां हृदामयम् ।
रक्तपित्तञ्च मूर्च्छाञ्च तथा छर्दिमरोचकम् ॥ ७६ ॥

अथ गर्भपातोपद्रवानाह—

प्रस्रंसमाने गर्भे स्याद्दाहः शूलश्च पार्श्वयोः ।
पृष्ठरुक्प्रदरानाहौ मूत्रसङ्गश्च जायते ॥ ७७ ॥

*प्रस्रंसमाने=पतति ॥ ७७ ॥

अथ गर्भस्य स्थानान्तरगमनोपद्रवानाह—

स्थानात्स्थानान्तरं तस्मिन्प्रयात्यपि च जायते ।
आमपक्वाशयादौ तु क्षोभः पूर्वेऽप्युपद्रवाः ॥ ७८ ॥

*पूर्वेऽप्युपद्रवाः=पार्श्वशूलादयः ॥ ७८ ॥

अथ गर्भपातोपद्रवचिकित्सामाह—

स्निग्धशीतक्रियास्तेषु दाहादिषु समाचरेत् ।
कुशकाशोरुबूकाणां मूलैर्गोक्षुरकस्य च ॥ ७९ ॥
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलहृत्परम् ।
श्वदंष्ट्रामधुकक्षुद्राऽम्लानैः सिद्धं पयः पिबेत् ।
शर्करामधुसंयुक्तं गर्भिणीवेदनापहम् ॥ ८० ॥

*अम्लानः=पुष्पजातिरयं "बाणपुष्प" इति गौडादौ प्रसिद्धः॥८०॥

मृत्कोष्ठागारिकागेहसम्भवा नवमल्लिका ।
समङ्गा धातकीपुष्पं गैरिकं च रसाञ्जनम् ॥ ८१ ॥
तथा सर्जरसश्चैतान्यथालाभं विचूर्णयेत् ।
तच्चूर्णं मधुना लिह्याद् गर्भपातप्रशान्तये ॥ ८२ ॥

*मृत्कोष्ठागारिकागेहसम्भवा=कोष्ठागारिका=कोष्ठागारकारिका "किरटी" तन्निर्मितगृहभवा मृत्तिका । समङ्गा=लज्जालुः ॥ ८१-८२ ॥

कशेरूत्पलशृङ्गाटकल्कं वा पयसा पिबेत् ।
पक्वं वचारसोनाभ्यां हिङ्गुसौवर्चलान्वितम् ।
आनाहे तु पिबेद् दुग्धं गुर्विणी सुखिनी भवेत् ॥ ८३ ॥

*सौवर्चलं="चौहार" इति लोके ॥८३ ॥

तृणपञ्चकमूलानां कल्केन विपचेत्पयः ।
तत्पयो गर्भिणी पीत्वा मूत्रसङ्गाद्विमुच्यते ॥ ८४ ॥
शालीक्षुकुशकाशैः स्याच्छरेण तृणपञ्चकम् ।

एषां मूलं तृषादाहपित्तासृङ्मूत्रसङ्गहृत् ॥ ८५ ॥

अथ गर्भिण्याः प्रतिमासचिकित्सामाह—

मधुकं शाकबीजं च पयस्या सुरदारु च ।
अश्मन्तकस्तिलाः कृष्णास्ताम्रवल्ली शतावरी ॥ ८६ ॥
वृक्षादनी पयस्या च प्रियङ्ग्गुत्पलसारिवाः ।
अनन्ता सारिवा रास्ना पद्मा मधुकमेव च ॥ ८७ ॥
बृहत्यौ काश्मरी चापि क्षीरिशुङ्गास्त्वचो घृतम् ॥
पृश्निपर्णी वचा शिग्रुः श्वदंष्ट्रा मधुपर्णिका ॥ ८८ ॥
शृङ्गाटकं विषं द्राक्षा कशेरु मधुकं सिता ।
वत्सैते सप्त योगाः स्युरर्द्धश्लोकसमापनाः ॥ ८९ ॥
यथासंख्यं प्रयोक्तव्या गर्भस्रावे पयोयुताः ।
एवं गर्भो न पतति गर्भशूलञ्च शाम्यति ॥ ९० ॥

*शाकबीजं = शाको = महावृक्षः कर्कशपत्रस्तस्य बीजम् । पयस्याऽत्र "क्षीरकाकोली" तदलाभे "अश्वगन्धा" ग्राह्या । अश्मन्तकः = कोविदारसदृशोऽम्लपत्रः "अम्लोना" इति लोके । ताम्रवल्ली = रामकान्ता-"मञ्जिष्ठा" इति लोके । प्रियङ्गु = कङ्गुः । अनन्ता = उत्पलसारिवा । पद्मा = पद्मचारिणी "भार्गी"ति केचित् । बृहत्यौ = स्थूलफला स्वल्पफला च । क्षीरिशुङ्गाः = क्षीरिणां वटादीनां शुङ्गाः = अविकशिताः प्रवालाः । मधुपर्णिका = गम्भारी । पयोयुताः प्रतिमासमर्द्धश्लोकोक्ताः, औषधमिलिताः कर्षमिताः शीततोयेन संपिष्टाः पलमितेन दुग्धेनालोडिताः पातव्या इत्यर्थः ॥ ८६-९० ॥

कपित्थबृहतीबिल्वपटोलेक्षुनिदिग्धिकाः ।
मूलानि क्षीरसिद्धानि दापयेद्भिषगष्टमे ॥ ९१ ॥

*कपित्थादीनां मूलानि मिलितानि पलमितानि पलाष्टकमिते क्षीरे द्वात्रिंशज्जलपलयुक्ते क्वाथयित्वा क्षीरमात्रमवशिष्टं पातुं दद्यादित्यर्थः ॥ ९१ ॥

नवमे मधुकानन्तापयस्यासारिवाः पिबेत् ॥ ९२ ॥

*अत्रापि मधुकादीनि मिलित्वा कर्षमितानि शीततोयेन सम्पिष्टा-

नि पलपरिमितेन दुग्धेनालोडितानि पिबेत् ॥ ९२ ॥

क्षीरं शुण्ठीपयस्याभ्यां सिद्धं स्याद्दशमे हितम् ।
सक्षीरं वा हिता शुण्ठी मधुकं सुरदारु च ॥ ९३ ॥

*दशमे शुण्ठीपयस्याभ्यां पूर्ववत्कथितं पिबेत् । अथवा-शुण्ठीमधुकसुरदारूणि शीतलजलपिष्टानि दुग्धेनालोडितानि पिबेत् ॥ ९३ ॥

क्षीरिकामुत्पलं दुग्धं समङ्गामूलकं शिवाम् ।
पिबेदेकादशे मासि गर्भिणी शूलशान्तये ॥ ९४ ॥

*अत्र क्षीरिकायाः फलं दद्यात् । समङ्गामूलकं = लज्जालुमूलम् ॥ ९४ ॥

सिता विदारी काकोली क्षीरी चैव मृणालिका ।
गर्भिणी द्वादशे मासि पिबेच्छूलघ्नमौषधम् ॥ ९५ ॥
एवमाप्यायते गर्भस्तीव्रा रुक् चोपशाम्यति ॥ ९६ ॥

*काकोल्यभावेऽश्वगन्धामूलं ग्राह्यम् ॥ ९५-९६ ॥

अथ वातशुष्कगर्भचिकित्सामाह—

गर्भो वातेन संशुष्को नोदरं पूरयेद्यदि ।
सा बृंहणीयैः संसिद्धं दुग्धं मांसरसं पिबेत् ॥ ९७ ॥
शुष्कात्तवमजाताङ्गं संशुष्कं मरुताऽऽर्दितम् ।
त्यक्तं जीवेन तत्तस्मात्कठिनं चावतिष्ठते ॥ ९८ ॥
शुक्रात्तवार्दको वायुरुदराध्मानकृद् भवेत् ।
कदा चिच्चेत्तदाऽऽध्मानं स्वयमेव प्रशाम्यति ॥ ९९ ॥
नैगमेयेन गर्भोऽयं हतो लोकध्वनिस्तदा ।
स एवाल्पप्रवृत्त्या चेल्लघुर्भूत्वाऽवतिष्ठते ॥ १०० ॥
तदा स गर्भो भवति लोके नागोदराह्वयः ।
धान्यकुट्टनमुख्या स्याच्चिकित्सा तूभयोरपि ॥ १०१ ॥

*नैगमेयः = बालग्रहः ॥ १००-१०१ ॥

अथ प्रसवसमयमाह—

नवमे दशमे मासि नारी गर्भं प्रसूयते ।
एकादशे द्वादशे वा ततोऽन्यत्र विकारतः ॥ १०२ ॥

अथ प्रसवमासमतिक्रम्य स्थायिनि गर्भे चिकित्सामाह—

वातेन गर्भसङ्कोचात्प्रसूतिसमयेऽपि या ।
गर्भं न जनयेन्नारी तस्याः शृणु चिकित्सितम् ॥ १०३ ॥
कुट्टयेन्मुशलेनैषा कृत्वा धान्यमुलूखले ।
विषमं चासनं पानं सेवेत प्रसवार्थिनी ॥ १०४ ॥

अथ काले प्रसवविलम्बे चिकित्सामाह—

प्रसवस्य विलम्बे तु धूपयेद्भितो भगम् ।
कृष्णसर्पस्य निर्मोकैस्तथा पिण्डीतकेन वा ॥ १०५ ॥

*निर्मोकः=सर्पकञ्चुकः । पिण्डीतकः="मयनफल" इति लोके ॥ १०५ ॥

तन्तुना लाङ्गलीमूलं बध्नीयाद्धस्तपादयोः ।
सुवर्चलां विशल्यां वा धारयेदाशु सूयते ॥ १०६ ॥

*सुवर्चला=सूर्यकान्ता । विशल्या=पाटला ॥ १०६ ॥

करङ्कीभूतगोमूर्द्धा सूतिकाभवनोपरि ।
स्थापितस्तत्क्षणान्नार्याः सुखं प्रसवकारकः ॥ १०७ ॥

*करङ्कीभूतः=अस्थिमात्रेण स्थितः ॥ १०७ ॥

पोतकीमूलकल्केन तिलतैलयुतेन च ।
योनेरभ्यन्तरं लिप्त्वा सुखं नारी प्रसूयते ॥ १०८ ॥

*पोतकी="पोई" इति लोके ॥ १०८ ॥

कृष्णा वचा चापि जलेन पिष्टा सैरण्डतैला खलु नाभिलेपात् ।
सुखं प्रसूतिं कुरुतेऽङ्गनानां निपीडितानां बहुभिः प्रमादैः ॥ १०९ ॥

मातुलुङ्गस्य मूलं तु मधुकेन युतं तथा ।
घृतेन सहितं पीत्वा सुखं नारी प्रसूयते ॥ ११० ॥
इक्षोरुत्तरमूलं निजतनुमानेन तन्तुना बद्ध्वा ।
कटिविषये गर्भवती सुखेन सूतेऽविलम्बेन ॥ १११ ॥
तालस्य चोत्तरं मूलं स्वप्रमाणेन तन्तुना ।
बद्ध्वा कट्यान्तु नियतं सुखं नारी प्रसूयते ॥ ११२ ॥

अथ मूढगर्भस्य निदानसम्प्राप्तिपूर्वकं लक्षणमाह—

मूढः करोति पवनः खलु मूढगर्भ-
शूलञ्च योनिजठरादिषु मूत्रसङ्गम्।
भुग्नोऽनिलेन विगुणेन ततः स गर्भः-
संख्यामतीत्य बहुधा समुपैति योनिम्॥ ११३॥

*अस्यायमर्थः-पवनः स्वहेतुभिः कुपितस्ततो मूढः=रुद्धगतिः। मूढगर्भं=रुद्धगतिं गर्भं, योन्यादिषु शूलं मूत्रसङ्गञ्च करोति। ततस्तेनानिलेन विगुणेन=रुद्धगतिना, स गर्भः, भुग्नः=कुटिलीकृतः, चतुर्भिः प्रकारैर्यातीत्यर्थः। अष्टभिरपरे। तत्संख्यानिरासार्थमाह—संख्यामतीत्य=उक्तां संख्यामतिक्रम्य, बहुधा=बहुभिः प्रकारैः, योनिं समुपैति॥ ११३॥

अथ चतुर्विधमूढगर्भस्य लक्षणमाह—

संकीलकः प्रतिखुरः परिघोऽथ बीज-
स्तेषूर्ध्वबाहुचरणैः शिरसा च योनौ।
सङ्गी च यो भवति कीलकवत्स कीलो-
दृश्यैः खुरैः प्रतिखुरः स हि कायसङ्गी॥
गच्छेद् भुजद्वयशिराः स च बीजकाख्यो-
योनौ स्थितः सपरिघः परिघेण तुल्यः॥ ११४॥

*संकीलकः=संशब्दोऽत्र छन्दोऽनुरोधात्, कप्रत्ययोऽपि स्वार्थे, तेन "कील" इति नाम। तस्य लक्षणमाह-ऊर्ध्वबाहुचरणैरिति। उत्थितैर्बाहुचरणशिरोभिः, योनौ यः सङ्गी भवति, स कीलः=कीलकाख्यो मूढगर्भः। दृश्यैः=बहिर्गतैः। खुरैः=खुरसाधर्म्यात्खुरशब्देनात्र हस्तौ पादौ च गृह्येते। तेन हस्तद्वयपादद्वयैर्बहिर्गतैः प्रतिखुरः, स हि कायसङ्गी=हस्तपादेतरकायेन सक्तो भवति। यो गर्भः, भुजद्वयशिराः=भुजद्वयमध्ये शिरो यस्य एतादृग्, गच्छेद्=निःसरेत्। तच्छेषेण शरीरेण सक्तो भवति, स बीजकाख्यः। परिघवद्योनौ, स परिघः॥ ११४॥

अथ मूढगर्भस्याष्टधात्वमाह—

द्वारं निरुद्ध्य शिरसा जठरेण कश्चित्-
कश्चिच्छरीरपरिवर्त्तितकुब्जकायः ।
एकेन कश्चिदपरस्तु भुजद्वयेन
तिर्य्यग्गतो भवति कश्चिदवाङ्मुखोऽन्यः ॥
पार्श्वापवृत्तगतिरेति तथैव कश्चि-
दित्यष्टधा भवति गर्भगतिः प्रसूतौ ॥ ११५ ॥

*अयमर्थः—कश्चिच्छिरसा योनिद्वारं निरुद्ध्य सक्तो भवति, कश्चि- ज्जठरेण तं निरुद्ध्य। कश्चित्कुब्जकायेन संकुब्जेन पृष्ठेन सक्तो भवति। कश्चिदेकेन भुजेन योनिसृतेन सक्तो भवति। कश्चिद् भुजद्वयेन तिर्य- ग्भूत्वा सक्तो भवति। अन्यो ग्रीवाभङ्गादधोभूतेन मुखेन सक्तो भवति। कश्चित्पार्श्वेनापवृत्ता निरुद्धा गतिर्यस्य, एवंविधो योनिद्वारमेति= याति ॥ ११५ ॥

अथ सुश्रुतोक्ताष्टप्रकारान्तरानाह—

१ कश्चिद् द्वाभ्यां योनिसक्थिभ्यां योनिमुखं प्रतिपद्यते।
२ कश्चिदाभुग्नैकसक्थिरितरेण सक्थ्ना।
३ कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशे तिर्य्यग्गतः।
४ कश्चिदुरःपार्श्वपृष्ठानामन्यतमेन योनिद्वारं पिधायावतिष्ठते।
५ अन्यः पार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना।
६ कश्चिदाभुग्नशिरा बाहुद्वयेन।
७ कश्चिदाभुग्नमध्यो हस्तपादशिरोभिः।
८ कश्चिदेकेन सक्थ्ना योनिद्वारं प्रतिपद्यते, अपरेण पायुमिति॥

अथासाध्यमूढगर्भिणीलक्षणमाह—

अपविद्धशिरा या तु शीताङ्गी निरपत्रपा।
नीलोद्गतशिरा हन्ति सा गर्भं स च तां तथा ॥ ११६ ॥

*अपविद्धशिराः=अवनतशिराः, शिरोऽपि धारयितुमशक्तेति यावत्। निरपत्रपा=लज्जाशून्या। नीलोद्गतशिरा=कुक्षौ नीला उद्गता शिरा यस्याः सा ॥ ११६ ॥

अथ मृतगर्भस्य क्रमेण कर्षणार्थं लक्षणमाह—

गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता।
भवेदुच्छ्वासपूतित्वं शूलं चान्तर्मृते शिशौ॥ ११७॥

*गर्भास्पन्दनं=गर्भस्याचलत्वम्। आवीनां प्रणाश इति-प्रसव-वेदनानामभावः। अथवा "आवी" शब्देनप्रसवलिङ्गानि=मूत्रकफप्रसेकादीनि कथ्यन्ते तेषां नाशः। शूलम्=अन्तर्मृतस्य शिशोरुच्छूनतया॥ ११७॥

अथ गर्भमरणकारणमाह—

मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः।
गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडितः॥ ११८॥

*उपतापो=दुःखम्। मानस उपतापो बन्धुधनक्षयादिना। आगन्तुरुपतापः=प्रहारादिः॥ ११८॥

अथ गर्भिण्या असाध्यलक्षणान्याह—

योनिसंवरणं सङ्गः कुक्षौ मक्कल्ल एव च।
हन्युः स्त्रियं मूढगर्भो यथोक्ताश्चाप्युपद्रवाः॥ ११९॥

*योनिसंवरणं=व्याधिविशेषः। तथा चोक्तं तन्त्रान्तरे—

*वातलान्यन्नपानानि ग्राम्यधर्मं प्रजागरम्।
अत्यर्थं सेवमानायां गर्भिण्यां योनिमार्गगः॥ १॥
मातरिश्वा प्रकुपितो योनिद्वारस्य संवृतिम्।
कुरुते रुद्धमार्गत्वात्पुनरन्तर्गतोऽनिलः॥ २॥
निरुणद्ध्याशयद्वारं पीडयन्गर्भसंस्थितम्।
निरुद्धवदनोच्छ्वासो गर्भश्चाशु विपद्यते॥ ३॥
उच्छ्वास ऊर्ध्वं हृदयात्माशयत्यथ गर्भिणीम्।
योनिसंवरणं नाम व्याधिमेनं प्रचक्षते।
अन्तकप्रतिमं घोरं नारभेत चिकित्सितम्॥ ४॥ इति।

सङ्गः=कुक्षौ गर्भस्य लग्नता, अप्रवृत्तिरिति यावत्। कुक्षौ मक्कल्लः=रक्तमारुतजः शूलविशेषः। यद्यपि प्रसूताया मक्कल्लशूलमुक्तम्। तथाऽपि सुश्रुते—"प्रजातायाश्चे"ति चकारेणाप्रसूताया-

अपि मक्कल्लशूलं भवतीति बोद्धव्यम् । उपद्रवाः = आक्षेपककासश्वासा-
दयः ॥ ११९ ॥

अथ मूढगर्भचिकित्सामाह—

याभिः सङ्कटकालेऽपि बहुशो नार्यः प्रसाविताः ।
सम्यग्लब्धं यशस्तास्तु नार्यः कुर्युरिमां क्रियाम् ॥ १२० ॥
गर्भे जीवति मूढे तु गर्भं यत्नेन निर्हरेत् ।
हस्तेन सर्पिषाऽऽक्तेन योनेरन्तर्गतेन सा ॥ १२१ ॥

*सा = जनयित्री ॥ १२१ ॥

मृते तु गर्भे गर्भिण्या योनौ शस्त्रं प्रवेशयेत् ।
शस्त्रशास्त्रार्थविदुषी लघुहस्ता भयोज्झिता ॥ १२२ ॥
सचेतनं तु शस्त्रेण न कथञ्चन दारयेत् ।
स दीर्यमाणो जननीमात्मानं चापि मारयेत् ॥ १२३ ॥
नोपेक्षेत मृतं गर्भं मूहूर्त्तमपि पण्डितः ।
तदाशु जननीं हन्ति प्रभूतान्नं यथा पशुम् ॥ १२४ ॥

*प्रभूतान्नम् = अतिमात्रमन्नम् ॥ १२४ ॥

अथ गर्भच्छेदनप्रकारमाह—

यद्यदङ्गं हि गर्भस्य योनौ सक्तं तु तद्भिषक् ।
सम्यग्विनिर्हरेच्छित्त्वा रक्षेन्नारीं प्रयत्नतः ॥ १२५ ॥
एवं निर्हृतशल्यां तां सिञ्चेदुष्णेन वारिणा ।
ततोऽभ्यक्तशरीरायां योनौ स्नेहं विधारयेत् ॥ १२६ ॥
एवं मृद्वी भवेद्योनिस्तच्छूलं चोपशाम्यति ॥ १२७ ॥

अथ प्रसूतायोनिक्षतादिचिकित्सामाह—

तुम्बीपत्रं तथा लोध्रं समभागं सुपेषयेत् ।
तेन लेपो भगे कार्यः शीघ्रं स्याद्योनिरक्षता ॥ १२८ ॥
पलाशोदुम्बरफलं तिलतैलसमन्वितम् ।
योनौ विलिप्तं मधुना गाढीकरणमुत्तमम् ॥ १२९ ॥
प्रसूता वनिता वृद्धकुक्षिह्रासाय सम्पिबेत् ।
प्रातर्मथितसंमिश्रां त्रिसप्ताहात्कणाजटाम् ॥ १३० ॥

अथ प्रसूतायाः प्रसवानन्तरमनिःसृतापरारोगोद्भवमाह—

प्रसूताया न पतिता जठरादपरा यदि ।
तदा सा कुरुते शूलमाध्मानं वह्निमन्दताम् ॥
*अपरा "आम्बर" इति लोके ॥ १३१ ॥

अथोदरस्थितापरायाश्चिकित्सामाह—

केशवेष्टितयाऽङ्गुल्या तस्याः कण्ठं प्रघर्षयेत् ।
निर्मोककटुकाऽलाबूकृतबन्धनसर्षपैः ॥
चूर्णितैः कटुतैलाक्तैर्धूपयेद्भिनो भगम् ॥ १३२ ॥
* निर्मोकः = सर्पकञ्चुकः । कृतबन्धनं = कोशातकम् ॥ १३२ ॥

लाङ्गलीमूलकल्केन पाणिपादतलानि हि ॥ १३३ ॥
प्रलिम्पेत्सूतिका योषिदपरापातनाय वै ।
हस्तं छिन्ननखं स्निग्धं सूतायोनौ शनैः क्षिपेत् ॥ १३४ ॥
अपरां तेन हस्तेन जनयित्री विनिर्हरेत् ।
एवं निर्हृतशल्यां तां सिञ्चेदुष्णेन वारिणा ॥
ततोऽभ्यक्तशरीराया योनौ स्नेहं निधापयेत् ॥ १३५ ॥

अथ मक्कल्लशूलस्य निदानं सम्प्राप्तिं लक्षणञ्चाह—

वनितायाः प्रसूताया वातो रूक्षेण वर्द्धितः ।
तीक्ष्णोष्णशोषितं रक्तं रुद्ध्वा ग्रन्थिं करोति हि ॥ १३६ ॥
नाभ्यधःपार्श्वयोर्वस्तौ वस्तिमूर्द्धनि चापि वा ।
ततश्च नाभौ वस्तौ च भवेच्छूलं तथोदरे ॥ १३७ ॥
भवेत्पक्वाशयाध्मानं मूत्रसङ्गश्च जायते ।
एतद्भिषग्भिरुदितं मक्कल्लामयलक्षणम् ॥ १३८ ॥

अथ मक्कल्लशूलचिकित्सामाह—

सुचूर्णितं यवक्षारं पिबेत्कोष्णेन वारिणा ।
सर्पिषा वा पिबेन्नारी मक्कल्लस्य निवृत्तये ॥ १३९ ॥

अथ पिप्पल्यादिगणमाह—

पिप्पली पिप्पलीमूलं मरिचं गजपिप्पली ।
नागरं चित्रकं चव्यं रेणुकैलाऽजमोदिकाः ॥ १४० ॥
सर्षपो हिङ्गु भार्गी च पाठेन्द्रयवजीरकाः ।

महानिम्बश्च मूर्वा च विषा तिक्ता विडङ्गकम् ॥ १४१ ॥
पिप्पल्यादिर्गणो ह्येष कफमारुतनाशनः ।
क्वाथमेषां पिबेन्नारी लवणेन समन्वितम् ॥ १४२ ॥
गुल्मशूलज्वरहरं दीपनञ्चामपाचनम् ।
मक्कल्लशूलगुल्मघ्नं कफानिलहरं परम् ॥ १४३ ॥
त्रिकटुकचातुर्जातककुस्तुम्बुरुचूर्णसंयुक्तम् ।
खादेद् गुडं पुराणं नित्यं मक्कल्लदलनाय ॥ १४४ ॥

अथ प्रसूताया हिताहितान्याह—

प्रसूता युक्तमाहारं विहारं च समाचरेत् ।
व्यायामं मैथुनं क्रोधं शीतसेवाञ्च वर्जयेत् ॥ १४५ ॥
मिथ्याऽऽचारात्सूतिकाया यो व्याधिरुपजायते ।
स कृच्छ्रसाध्योऽसाध्यो वा भवेत्तत्पथ्यमाचरेत् ॥ १४६ ॥

अथ सूतिकारोगनिदानमाह—

मिथ्योपचारात्संक्लेशाद्विषमाजीर्णभोजनात् ।
सूतिकायास्तु ये रोगा जायन्ते दारुणाश्च ते ॥ १४७ ॥

*मिथ्योपचाराद्=अनुचिताचरणात्, प्रवातादिसेवनात् । संक्लेशाद्=संक्लेश्यन्ते दोषा अनेनेति संक्लेशो=दोषजनकमात्रं तस्मात् । दारुणाः=कष्टसाध्याः ॥ १४७ ॥

अथ सूतिकारोगानाह—

अङ्गमर्दो ज्वरः कासः पिपासा गुरुगात्रता ।
शोथः शूलातिसारौ च सूतिकारोगलक्षणम् ॥ १४८ ॥

*एतेऽङ्गमर्दादयः प्रायेण सूतिकाया भवन्ति, सूतिकारोगत्वेन लक्ष्यन्ते ॥ १४८ ॥

अथ प्रसूताया ज्वरादीनां रोगविशेषाणां निदानविशेषमाह—

ज्वरातीसारशोथाश्च शूलानाहबलक्षयाः ।
तन्द्राऽरुचिप्रसेकाद्या वातश्लेष्मसमुद्भवाः ॥ १४९ ॥
कृच्छ्रसाध्या हि ते रोगाः क्षीणमांसबलाश्रिताः ।
ते सर्वे सूतिकानाम्ना रोगास्ते चाप्युपद्रवाः ॥ १५० ॥

*सूतिकाभवत्वेन सूतिकानाम्ना ते रोगाः, आश्रयाश्रितयोरभेदो-

पचारात । ते चाप्युपद्रवा इति । त एव ज्वरादय उक्तानां रोगाणामन्यतमं प्रधानीकृत्योपद्रवाश्च ॥ १४६-१५० ॥

अथ सूतिकारोगचिकित्सामाह—

सूतिकारोगशान्त्यर्थ कुर्याद्वातहरीं क्रियाम् ।
दशमूलकृतं क्वाथं कोष्णं दद्याद् घृतान्वितम् ॥ १५१ ॥
अमृतानागरसहचरभद्रोत्कटपञ्चमूलकं जलदम् ।
शृतशीतं मधुयुक्तं शमयत्यचिरेण सूतिकाऽऽतङ्कम् ॥१५२॥

अथ देवदार्वादिक्वाथमाह—

देवदारु वचा कुष्ठं पिप्पली विश्वभेषजम् ।
भूनिम्बः कट्फलं मुस्तं तिक्ता धान्यहरीतकी ॥ १५३ ॥
गजकृष्णा सदुःस्पर्शा गोक्षुरुर्धन्वयासकः ।
बृहत्यतिविषा छिन्ना कर्कटः कृष्णजीरकः ॥ १५४ ॥
समभागान्वितैरेतैः सिन्धुरामठसंयुतम् ।
क्वाथमष्टावशेषं तु प्रसूतां पाययेत् स्त्रियम् ॥ १५५ ॥
शूलकासज्वरश्वासमूर्च्छाकम्पशिरोऽर्त्तिभिः ।
युक्तं प्रलापतृड्दाहतन्द्राऽतीसारवान्तिभिः ॥ १५६ ॥
निहन्ति सूतिकारोगं वातपित्तकफोद्भवम् ।
कषायो देवदार्वादिः सुतायाः परमौषधम् ॥ १५७ ॥

अथ पञ्चजीरकपाकमाह—

जीरकं स्थूलजीरश्च शतपुष्पाद्वयं तथा ।
यवानी चाजमोदा च धान्यकं मेथिकाऽपि च ॥ १५८ ॥
शुण्ठी कृष्णा कणामूलं चित्रकं हपुषाऽपि च ।
बदरीफलचूर्णश्च कुष्ठं कम्पिल्लकं तथा ॥ १५९ ॥
एतानि पलमात्राणि गुडं पलशतं मतम् ।
क्षीरप्रस्थद्वयं दद्यात्सर्पिषः कुडवं तथा ॥ १६० ॥
पञ्चजीरकपाकोऽयं प्रसूतानां प्रशान्तये ।
युज्यते सूतिकारोगे योनिरोगे ज्वरे क्षये ॥ १६१ ॥
कासे श्वासे पाण्डुरोगे कार्श्ये वातामयेषु च ॥ १६२ ॥

अथ सौभाग्यशुण्ठीपाकमाह—

आज्यं स्यात्पलयुग्ममत्र पयसः प्रस्थद्वयं खण्डतः—
पञ्चाशत्पलमत्र चूर्णितमथो प्रक्षिप्यते नागरम् ।
प्रस्थार्धं गुडवद्विपाच्य विधिना मुष्टित्रयं धान्यका-
न्मिश्याः पञ्चपलं पलं क्रिमिरिपोः साजाजिजीरादपि॥१६३॥
व्योषाम्भोददलोरगेन्द्रसुमनस्त्वग्द्राविडीनां पलं-
पक्कं नागरखण्डसंज्ञकमिदं तत्सूतिकारोगहृत् ।
तृट्छर्दिज्वरदाहशोषशमनं सश्वासकासापहं-
प्लीहव्याधिविनाशनं कृमिहरं मन्दाग्निसन्दीपनम् ॥१६४॥

*दलं=पत्रकम् । उरगेन्द्रसुमनः=नागकेशरम् । द्राविडा= सूक्ष्मैला ॥ १६३-१६४ ॥

अथ प्रसूताया नियमसमयावधिमाह—

सर्वतः परिशुद्धा स्यात्स्निग्धपथ्याल्पभोजना ।
स्वेदाभ्यङ्गपरा नित्यं भवेन्मासमतन्द्रिता ॥ १६५ ॥

*सर्वतः परिशुद्धा=निःसृताशेषदुष्टरुधिरा । अतन्द्रिता=पथ्यादौ सावधाना ॥ १६५ ॥

प्रसूता सार्धमासान्ते दृष्टे वा पुनरार्त्तवे ।
सूतिकानामहीना स्यादिति धन्वन्तरेर्मतम् ॥ १६६ ॥
उपद्रवविशुद्धाञ्च विज्ञाय वरवर्णिनीम् ।
ऊर्द्ध्वं चतुर्भ्यो मासेभ्यः परिहारं विवर्जयेत् ॥ १६७ ॥

अथ स्तनरोगस्य सम्प्राप्तिमाह—

सक्षीरौ वाऽप्यदुग्धौ वा दोषः प्राप्य स्तनौ स्त्रियाः ।
रक्तं मांसञ्च संदूष्य स्तनरोगाय कल्पते ॥ १६८ ॥

*अदुग्धावपि स्तनौ प्रसूताया गर्भिण्याश्च स्त्रिया बोद्धव्यौ ॥१६८॥

अत आह सुश्रुतः—

धमन्यः संवृतद्वाराः कन्यानां स्तनसंश्रिताः ।
दोषाविसरणास्तासां न भवन्ति स्तनामयाः ॥ १६९ ॥

*दोषाविसरणाः=संवृतद्वारत्वेन दोषाणामविसरणम्=असञ्चारो यासु ताः ॥ १६९ ॥

तासामेव प्रसूतानां गर्भिणीनाञ्च ताः पुनः ।
स्वभावादेव विवृता जायन्ते संस्रवन्त्यतः ॥ १७० ॥

अथ स्तनरोगाणामतिदेशेन लक्षणान्याह—

पञ्चानामपि तेषां तु हित्वा शोणितविद्रधिम् ।
लक्षणानि समानानि बाह्यविद्रधिलक्षणैः ॥ १७१ ॥

*पञ्चानां=वातपित्तकफसन्निपातागन्तुजानाम् । आगन्तुजस्तनरोगोऽभिघातेन शल्येन च बोद्धव्यः, रक्तजस्यासम्भवात्स्वभावात्॥१७१॥

अथ स्तनरोगचिकित्सामाह—

शोथं स्तनोऽत्थितमवेक्ष्य भिषग्विदध्या-
द्विद्रधावभिहितं बहुधा विधानम् ।
आमे विदाहिनि तथैव च तस्य पाके
यस्याः स्तनौ सततमेव च निग्रहात् तौ ॥ १७२ ॥
पित्तघ्नानि तु शीतानि द्रव्याण्यत्र प्रयोजयेत् ।
जलौकोभिर्हरेद्रक्तं न स्तनावुपनाहयेत् ॥ १७३ ॥

*उपनाहयेत्=स्वेदयेत् ॥ १७३ ॥

लेपो विशालामूलेन हन्ति पीडां स्तनोत्थिताम् ।
निशाकनककल्काभ्यां लेपः प्रोक्तः स्तनार्त्तिहा ॥ १७४ ॥

*विशाला=इन्द्रवारुणी । कनकस्य=धत्तूरस्य पत्रं ग्राह्यम्॥१७४॥

लेपो निहन्ति मूलं वन्ध्याककोंटिकाभवं शोथम् ।
निर्वाप्य तप्तलोहं सलिले तद्वा पिबेत्तत्र ॥ १७५ ॥

इत्येकोनसप्ततितमो योनिरोगाधिकारः समाप्तः ॥ ६९ ॥

इति स्त्रीणां रोगाधिकाराः समाप्ताः ।

---

## अथ सप्ततितमो बालरोगाधिकारः ॥ ७० ॥

तत्र बालानां बालग्रहरक्षोपदेशमाह—

बालग्रहा अनाचारात्पीडयन्ति शिशुं यतः ।
तस्मात्तदुपसर्गेभ्यो रक्षेद्बालं प्रयत्नतः ॥ १ ॥

अथ बालग्रहाणां नामान्याह—

स्कन्दग्रहस्तु प्रथमः स्कन्दापस्मार एव च ।

शकुनी रेवती चैव पूतना चान्धपूतना ॥ २ ॥
पूतना शीतपूर्वा च तथैव मुखमण्डिका ।
नवमो नैगमेयश्च प्रोक्ता बालग्रहा अमी ॥ ३ ॥

अथ बालग्रहोत्पत्तिमाह—

नव स्कन्दादयः प्रोक्ता बालानां ये ग्रहा अमी ।
श्रीमन्तो दिव्यवपुषो नारीपुरुषविग्रहाः ॥ ४ ॥
एते स्कन्दस्य रक्षाऽर्थं कृत्तिकोमाऽग्निशूलिभिः ।
सृष्टाः शरवणस्थस्य रक्षितस्य स्वतेजसा ॥ ५ ॥
स्कन्दः सृष्टो भगवता देवेन त्रिपुरारिणा ।
बिभर्ति चापरां संज्ञां कुमार इति संग्रहः ॥ ६ ॥

*अयं हि कार्त्तिकेयादन्यः ॥ ६ ॥

स्कन्दापस्मारसंज्ञो यः सोऽग्निना तत्समद्युतिः ।
स च स्कन्दसखो नाम्ना विशाख इति चोच्यते ॥ ७ ॥
ग्रहाः स्त्रीविग्रहा एते नानारूपाः प्रकीर्त्तिताः ।
गङ्गोमाकृतिकानां ते भागा राजसतामसाः ॥ ८ ॥
नैगमेयस्तु पार्वत्या सृष्टो मेषाननो ग्रहः ।
कुमारधारी देवस्य गुहस्यात्मसमोऽस्ति वै ॥ ९ ॥
ततो भगवता स्कन्दे सुरसेनापतौ कृते ।
उपतस्थुर्ग्रहा एते दीप्तशक्तिधरं गुहम् ॥ १० ॥
ऊचुः प्राञ्जलयश्चैनं वृत्तिर्नो दीयतामिति ।
तेषामर्थं ततः स्कन्दः शिवं देवमचोदयत् ॥ ११ ॥
ततो ग्रहांस्तानुवाच भगवान्भगनेत्रहृत् ।
तैर्यग्योनिं मानुषं च दैवञ्च त्रितयं जगत् ॥ १२ ॥
परस्परोपकारेण वर्त्तते धार्यते तथा ।
देवान्नरान्प्रीणयन्ति तैर्यग्योनींस्तथैव च ॥ १३ ॥
यथाकालं प्रवृत्तैस्तु उष्मवर्षहिमानिलैः ।
इज्याऽञ्जलिनमस्कारैर्जपहोमैस्तथैव च ॥ १४ ॥
सम्यक्प्रयुक्तैश्च नराः प्रीणयन्त्यपि देवताः ।

भागधेयविभक्तश्च शेषं किञ्चिन्न विद्यते ॥ १५ ॥
तद्युष्माकं शुभा वृत्तिर्बालेष्वेव भविष्यति ॥ १६ ॥

अथ बालग्रहाणां बालग्रहणकारणमाह—

कुलेषु येषु नेज्यन्ते देवाः पितर एव च ।
ब्राह्मणा साधवो वाऽपि गुरवोऽतिथयस्तथा ॥ १७ ॥
निवृत्तशौचाचारेषु तथा कुत्सितवृत्तिषु ।
निवृत्तभिक्षावलिषु भग्नकांस्यगृहेषु वा ॥ १८ ॥
ते वै बालांश्च तांस्तान्हि ग्रहा हिंसन्त्यशङ्किताः ।
तत्र वो विपुला वृत्तिः पूजा चैव भविष्यति ॥ १९ ॥
एवं ग्रहाः समुत्पन्ना बालान्हिंसन्ति चाप्यतः ।
ग्रहोपसृष्टा बालाः स्युर्दुश्चिकित्स्यतमास्ततः ॥ २० ॥

अथ सामान्यबालग्रहजुष्टानां लक्षणान्याह—

क्षणादुद्विजते बालः क्षणात्त्रस्यति रोदिति ।
नखैर्दन्तैर्दारयति धात्रीमात्मानमेव च ॥ २१ ॥
ऊर्ध्वं निरीक्षते दन्तान्खादेत्कूजति जृम्भते ।
भ्रुवौ क्षिपति दष्टौष्ठः फेनं वमति चासकृत् ॥ २२ ॥
क्षामोऽति निशि जागर्त्ति शूनाङ्गो भिन्नविट्स्वरः ।
मत्स्यशोणितगन्धश्च न चाश्नाति यथा पुरा ॥ २३ ॥
दुर्बलो मलिनाङ्गश्च नष्टसंज्ञः प्रजायते ।
सामान्यग्रहजुष्टस्य लक्षणं समुदाहृतम् ॥ २४ ॥

अथ विशिष्टग्रहजुष्टबालकानां लक्षणान्याह—

स्रस्ताङ्गः क्षतजसगन्धिकस्तनद्विड् वक्रास्यो हतचलितैकपक्ष्मनेत्रः ।
उद्विग्नः ससलिलचक्षुरल्परोदी स्कन्दार्त्तो भवति च गाढमुष्टिवर्चाः॥२५॥
निःसंज्ञो भवति पुनर्लभेत संज्ञां-
संस्तब्धः करचरणैश्च नृत्यतीव ।
विण्मूत्रे सृजति चिरेण जृम्भमाणः
फेनं वा सृजति च तत्सखाभिजुष्टः ॥ २६ ॥

*तत्सखाभिजुष्टः=स्कन्दापस्मारयुक्तः ॥ २६ ॥

स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः-

साम्रावत्रणपरिपीडितः समन्तात् ।
स्फोटैश्च प्रचिततनुः सदाहपाकै-
र्विज्ञेयो भवति शिशुः क्षतः शकुन्या ॥ २७ ॥

रक्तास्यो हरितमलोऽतिपाण्डुदेहः श्यावो वा मुखकरपाकवेदनाऽऽर्त्तः ।
गृह्णाति व्यथिततनुश्च कर्णनासं रेवत्या भृशमभिपीडितः कुमारः॥२८॥

विट्स्रावी स्वपिति न वासरे न रात्रौ
विड्भिन्नं विसृजति काकतुल्यगन्धः ।
छर्द्यार्त्तो हृषिततनूरुहः कुमार-
स्तृष्णालुर्भवति च पूतनागृहीतः ॥ २९ ॥

यो द्वेष्टि स्तनमतिसारकासहिक्काछर्दीभिर्ज्वरसहिताभिरर्द्यमानः ।
दुर्वर्णः सततमथापि योऽस्रगन्धिस्तं ब्रूयाद्भिषगथ गन्धपूतनाऽऽर्त्तम्॥३०॥

आक्रन्दत्यभिचकितं सुवेपमानः-
संलीनो भवति व्यथाऽन्त्रकूजयुक्तः ।
स्रस्ताङ्गो भृशमतिशीर्यते च शीतात्-
तं ब्रूयाद्भिषगथ शीतपूतनाऽऽर्त्तम् ॥ ३१ ॥

म्लानाङ्गः सरुधिरपाणिपादवक्त्रो बह्वाशी कलुषशिरावृतोदरो यः ।
सोद्वेगो भवति च मूत्रतुल्यगन्धिः स ज्ञेयः शिशुरथ वक्त्रमण्डिकाऽऽर्त्तः॥३२॥
यः फेनं वमति विनम्यते च मध्ये सोद्वेगो विहसति चोर्ध्वमीक्षमाणः ।
कूजेच्च प्रततमथो वसास्रगन्धिर्निःसंज्ञो भवति स नैगमेयजुष्टः ॥ ३३ ॥

अथ सामान्यग्रहजुष्टचिकित्सामाह—

सहामुण्डितिकोदीच्यक्वाथस्नानं ग्रहापहम् ॥ ३४ ॥
*सहा=माषपर्णी ॥ ३४ ॥

सप्तच्छदामयनिशाचन्दनैश्चानुलेपनम् ।
सर्पत्वग्लशुनं मूर्वा सर्षपारिष्टपल्लवाः ॥ ३५ ॥
बिडालविड्जालोम मेषशृङ्गी वचा मधु ।
धूपः शिशोर्ज्वरघ्नोऽयमशेषग्रहनाशनः ।
बालशान्तीष्टकर्माणि कार्याणि ग्रहशान्तये ॥ ३६ ॥

अथाष्टमङ्गलघृतमाह—

वचा कुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि च ।
सारिवा सैन्धवं चैव पिप्पली घृतमष्टमम् ।
सिद्धं घृतमिदं मेध्यं पिबेत्प्रातर्दिने दिने ॥ ३७ ॥
दृढस्मृतिः क्षिप्रमेधाः कुमारो बुद्धिमान्भवेत् ।
न पिशाचा न रक्षांसि न भूता न च मातरः ॥
न भवन्ति कुमाराणां पिबतामष्टमङ्गलम् ॥ ३८ ॥

अथ विशिष्टग्रहजुष्टबालकचिकित्सा ।

तत्र स्कन्दग्रहजुष्टचिकित्सामाह—

स्कन्दग्रहोपसृष्टस्य कुमारस्य प्रशान्तये ।
वातघ्नद्रुमपत्राणां क्वाथेन परिषेचनम् ॥ ३९ ॥
देवदारुणि रास्नायां मधुरेषु गणेषु च ।
सिद्धं सर्पिश्च सक्षीरं पातुमस्मै प्रदापयेत् ॥ ४० ॥
सर्षपाः सर्पनिर्मोको वचा काकादनी घृतम् ।
उष्ट्राजाविगवां चापि रोमधूपनं भवेत् ॥ ४१ ॥

*काकादनी = श्वेतगुञ्जा ॥ ४१ ॥

सोमवल्लीमिन्द्रवृक्षं वन्दाकं विल्वजं शमीम् ।
मृगादन्याश्च मूलानि ग्रथितानि विधारयेत् ॥ ४२ ॥

*सोमवल्ली = सोमलता । इन्द्रवृक्षं = ककुभवृक्षम् । मृगादनी = इन्द्रवारुणी ॥ ४२ ॥

रक्तानि माल्यानि तथा पताकाः रक्तांश्च गन्धान् विविधांश्च भक्ष्यान् ।
घण्टां च देवाय बलिं निवेद्य सकुक्कुटं स्कन्दगृहे हिताय ॥ ४३ ॥
स्नानं त्रिरात्रं निशि चत्वरेषु कुर्यात्परं शालियवैर्नवैस्तु ।
गायत्रिपूताभिरथाद्भिरग्निं प्रज्वालयेदाहुतिभिश्च धीमान् ॥ ४४ ॥

रक्षामतः प्रवक्ष्यामि बालानां पापनाशिनीम् ।
अहन्यहनि कर्त्तव्या या भिषग्भिरतन्द्रितैः ॥ ४५ ॥
तपसां तेजसां चैव यशसां वपुषां तथा ।
निधानं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु ॥ ४६ ॥

ग्रहः सेनापतिर्देवो देवसेनापतिर्विभुः ।
देवसेनारिपुहरः पातु त्वां भगवान्गुहः ॥ ४७ ॥
देवदेवस्य महतः पावकस्य च यः सुतः ।
गङ्गोमाकृत्तिकानां च स ते शर्म प्रयच्छतु ॥ ४८ ॥
रक्तमाल्याम्बरधरो रक्तचन्दनभूषितः ।
रक्तदिव्यवपुर्देवः पातु त्वां क्रौञ्चसूदनः ॥ ४९ ॥

अथ स्कन्दापस्मारग्रहजुष्टचिकित्सामाह—

बिल्वः शिरीषो गोलोमी सुरसाऽदिश्च यो गणः ।
परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये ॥ ५० ॥

*गोलोमी = श्वेतदूर्वा ॥ ५० ॥

सुरसा श्वेतसुरसा पाठा फञ्जी फणिज्झकः ।
सौगन्धिकं भूस्तृणको राजिका श्वेतबर्बरी ॥ ५१ ॥
कट्फलं खरपुष्पा च कासमर्दश्च शल्लकी ।
विडङ्गमथ निर्गुण्डी कर्णिकार उदुम्बरः ॥ ५२ ॥
बला च काकमाची च तथा च विषमुष्टिका ।
कफक्रिमिहरः ख्यातः सुरसाऽऽदिरयं गणः ॥ ५३ ॥

*सुरसा = कृष्णतुलसी, श्वेतसुरसा = श्वेततुलसी, फञ्जी = भार्गी, फणिज्झकः = मरुबकः । सौगन्धिकं = कह्लारम् । भूस्तृणकः = सुगन्धतृणम्, अनेनैव नाम्ना गौडादौ प्रसिद्धः । खरपुष्पा = बर्बरी । कासमर्दः = "कसौंदी" अनेनैव नाम्ना प्रसिद्धः । विषमुष्टिः = "बका" इति लोके ॥ ५१–५३ ॥

अष्टमूत्रविपक्वं च तैलमभ्यञ्जने हितम् ॥ ५४ ॥
गोऽजाविमहिषाश्वानां खरोष्ट्रकरिणां तथा ।
मूत्राष्टकमिदं ख्यातं सर्वशास्त्रेषु सम्मतम् ॥ ५५ ॥
क्षीरिवृक्षकषायेण काकोल्यादिगणेन च ।
विपक्तव्यं घृतं पश्चाद्दातव्यं पयसा सह ॥ ५६ ॥

*काकोल्यादिगणेन कल्कीकृतेन तैलं पक्तव्यम् ॥ ५६ ॥

काकोली क्षीरकाकोली जीवकर्षभकौ तथा ।
ऋद्धिर्वृद्धिस्तथा मेदा महामेदा गुडूचिका ॥ ५७ ॥
मुद्गपर्णी माषपर्णी पद्मकं वंशलोचना ।
शृङ्गी प्रपौण्डरीकञ्च जीवन्ती मधुयष्टिका ॥ ५८ ॥
द्राक्षा चेति गणो नाम्ना काकोल्यादिरुदीरितः ।
स्तन्यकृद् बृंहणो वृष्यः पित्तरक्तमलापहः ॥ ५९ ॥
उत्सादनं वचा हिङ्गुयुक्तमत्र प्रकीर्त्तितम् ।
गृध्रोलूकपुरीषाणि केशा हस्तिनखो घृतम् ॥ ६० ॥
वृषभस्य च रोमाणि योज्यान्युद्धूपने सदा ।
अनन्तां कुक्कुटीं विम्बीं मर्कटीञ्चापि धारयेत् ॥ ६१ ॥

*अनन्ता = जवासा । कुक्कुटी = शाल्मली ॥ ६१ ॥

पक्वापक्वानि मांसानि प्रसन्ना रुधिरं पयः ।
मुद्गौदनं निवेद्याथ स्कन्दापस्मारिणे वटे ॥ ६२ ॥

*वटे = वटतले, बलिं निवेद्येत्यन्वयः ॥ ६२ ॥

चतुष्पथे कारयेच्च स्नानं तेन ततः पठेत् ॥ ६३ ॥

*तेन = स्कन्दापस्मारिणा, स्नानं कारयेदित्यन्वयः ॥ ६३ ॥

स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा ।
विशाखः स शिशोरस्य शिवायास्तु शुभाननः ॥ ६४ ॥

अथ शकुनीग्रहजुष्टचिकित्सामाह—

शकुनीग्रहजुष्टस्य कार्यं वैद्येन जानता ।
वेतसाम्रकपित्थानां क्वाथेन परिषेचनम् ॥ ६५ ॥
ह्रीबेरमधुकोशीरसारिवोत्पलपद्मकैः ।
लोध्रप्रियङ्गुमञ्जिष्ठागैरिकैः प्रदिहेच्छिशुम् ॥ ६६ ॥

*प्रदिहेद् = लिम्पेत् । दिह्यादिति सिद्धे दिहेदिति रूपसिद्धिरार्षत्वात् ॥ ६६ ॥

स्कन्दग्रहोक्ता धूपाश्च हिता अत्र भवन्ति हि ।
स्कन्दापस्मारशमनं घृतमत्रापि पूजितम् ॥ ६७ ॥
शतावरीमृगैर्वारुनागदन्तीनिदिग्धिकाम् ।

लक्ष्मणां सहदेवीं च बृहतीं चापि धारयेत् ॥ ६८ ॥

*मृगर्वारु=बृहती इन्द्रवारुणी। नागदन्ती=नागदुली"ति लोके प्रसिद्धा ॥ ६८ ॥

तिलतण्डुलकं माल्यं हरितालं मनःशिला।
बलिरेषा करञ्जे तु निवेद्यो नियतात्मना ॥ ६९ ॥
निकुञ्जे च प्रयोक्तव्यं स्नानमस्य यथाविधि।
श्वेताशिरीषगन्धाश्वधवगुग्गुलुसर्षपैः ॥ ७० ॥
सिद्धमभ्यञ्जने तैलं धारणं पूर्वमेव तु।
शकुनीग्रहशान्त्यर्थं प्रदेहं कारयेद्धितम् ॥ ७१ ॥
कुर्याच्च विविधां पूजां शकुन्याः कुसुमैः शुभैः।
निकुम्भोक्तेन विधिना स्नापयेत्तं ततः पठेत् ॥ ७२ ॥

निकुम्भः=शिवस्य गणविशेषस्तेनोक्तेन विधिना ॥ ७२ ॥

अथ शिशुरक्षायां देव्याः स्तुतिमाह—

अन्तरिक्षचरा देवी सर्वालङ्कारभूषिता।
अधोमुखी सूक्ष्मतुण्डा शकुनी ते प्रसीदतु ॥ ७३ ॥
दुर्दर्शना महाकाया पिङ्गाक्षी भैरवस्वरा।
लम्बोदरी शङ्कुकर्णी शकुनी ते प्रसीदतु ॥ ७४ ॥

अथ रेवतीग्रहजुष्टचिकित्सामाह—

अश्वगन्धाऽजशृङ्गी च सारिवाऽथ पुनर्नवा।
सहा विदारी ह्येतासां क्वाथेन परिषेचनम् ॥ ७५ ॥

*अजशृङ्गी=(मेढाशृङ्गी)। सहा=(सेवती) पुष्पजातिः ॥७५॥

तैलमभ्यञ्जने कार्यं कुष्ठे सर्जरसे तथा।
पलङ्कषायां नलदे तथा गौरकदम्बके ॥ ७६ ॥

*सर्जरसः="राल" इति लोके। पलङ्कषा=गुग्गुलुः। नलदं=लामज्जकम् 'उशीरवत्पीतच्छविः। गौरकदम्बकः=हारिद्रकः "हरदुआ कदम्ब" इति लोके ॥ ७६ ॥

धवाश्वकर्णककुभशल्लकीतिन्दुकेषु च।
काकोल्यादौ गणे चापि सिद्धं सर्पिः पिबेच्छिशुः ॥ ७७ ॥

* अश्वकर्णः="साङ्कु" इति लोके प्रसिद्धः ॥ ७७ ॥

कुलत्थं शङ्खचूर्णञ्च प्रदेहः साश्वगन्धिकः ।
गृध्रोलूकपुरीषाणि यवान् यवफलो घृतम् ।
सन्ध्ययोरुभयोः कार्यमेतदुद्धूपनं शिशोः ॥ ७८ ॥

*यवफलो=वंशाङ्कुरः ७८ ॥

शुक्लाः सुमनसो लाजाः पयः शाल्योदनं दधि ।
बलिर्निवेद्यो गोतीर्थे रेवत्यै प्रयतात्मना ॥ ७९ ॥

*गोतीर्थे=गोष्ठे ॥ ७९ ॥

स्नानं धात्रीकुमाराभ्यां सङ्गमे कारयेद्भिषक् ।
नानाशस्त्रधरा देवी चित्रमाल्यानुलेपना ॥ ८० ॥
चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु ।
उपासते यां सततं देव्यो विविधभूषणाः ॥ ८१ ॥
लम्बा कराला विनता तथैव बहुपुत्रिका ।
रेवती शुष्कनासा च तुभ्यं देवी प्रसीदतु ॥ ८२ ॥

अथ पूतनाग्रहजुष्टचिकित्सामाह—

कपोतवङ्का श्योनाको वरुणः पारिभद्रकः ।
आस्फोता चैव योज्याः स्युर्बालानां परिषेचने ॥ ८३ ॥

* कपोतवङ्का=ब्राह्मी । आस्फोता=अपराजिता ॥ ८३ ॥

नवा पयस्या गोलोमी हरितालं मनःशिला ।
कुष्ठं सर्जरसश्चैव तैलार्थे कल्क इष्यते ॥ ८४ ॥

*नवा पयस्या=नूतना क्षीरविदारी। गोलोमी=श्वेतदूर्वा॥८४॥

हितं घृतं तु गोक्षीर्याः संसिद्धं मधुकेन च ।
कुष्ठतालीसखदिराः स्पन्दनोऽर्जुन एव च ॥ ८५ ॥
पनसः ककुभश्चापि मज्जानो बदरस्य च ।
कुक्कुटास्थि घृतं चापि धूपनं सह सर्षपैः ॥ ८६ ॥

*स्पन्दनः="स्पन्दन" इत्येवं नाम्ना प्रसिद्धः ॥ ८५–८६॥

काकादनीं चित्रफलां बिम्बीं गुञ्जाञ्च धारयेत् ॥ ८७ ॥

*काकादनी=श्वेतगुञ्जा । चित्रफला=बृहदिन्द्रवारुणी ॥८७।

मत्स्यौदनं बलिं दद्यात्कृशरां पललं तथा ।
शरावसम्पुटे कृत्वा तस्य शून्ये गृहे भिषक् ॥ ८८ ॥
उत्सृष्टान्नाभिषिक्तस्य शिशोः स्नपनमिष्यते ।
कुष्ठतालीसखदिरं चन्दनं स्पन्दनं तथा ॥ ८९ ॥
देवदारु वचा हिङ्गु कुष्ठं गिरिकदम्बकम् ।
एला हरेणवश्चापि योज्या उद्धूपने सदा ॥ ९० ॥
मलिनाम्बरसंवीता मलिना रूक्षमूर्द्धजा ।
शून्यागारस्थिता देवी दारकं पातु पूतना ॥ ९१ ॥

अथ गन्धपूतनागृहजुष्टचिकित्सामाह—

तिक्तद्रुमाणां पत्रेषु क्वाथः कार्योऽभिषेचने ॥ ९२ ॥

अथ तिक्तद्रुमानाह—

निम्बः पटोलः क्षुद्रा च गुडूची वासकस्तथा ।
विसर्पकुष्ठनुत्ख्यातो गणोऽयं पञ्चतिक्तकः ॥ ९३ ॥

इति तिक्तद्रुमाः ।

पिप्पली पिप्पलीमूलं चित्रको मधुको मधु ।
शालिपर्णी बृहत्यौ च घृतार्थं च समाहरेत् ।
सर्वगन्धैः प्रदेहश्च गात्रे चाक्ष्णोश्च शीतलैः ॥ ९४ ॥

*सर्वगन्धैः=कुङ्कुमागुरुकर्पूरकस्तूरीचन्दनैः सह । अक्ष्णोस्तु शीतलैश्चन्दनकर्पूरैः, न तु कस्तूरीकुङ्कुमागुरुभिस्तेषामुष्णत्वात् ॥ ९४ ॥

पुरीषं कौक्कुटं केशाश्चर्म सर्पभवं तथा ।
जीर्णं चाभेरक्षणशो वासो धूपनायोपकल्पयेत् ॥ ९५ ॥
कुक्कुटीं मर्कटीं बिम्बीमनन्तां चापि धारयेत् ।
मांसमामं तथा पक्वं शोणितं च चतुष्पथे ॥ ९६ ॥
निवेद्यमन्तश्च गृहे शिशो रक्षानिमित्ततः ।
कराला पिङ्गला मुण्डा कषायाम्बरसंवृता ।
देवी बालमिमं प्रीता रक्ष त्वं गन्धपूतने ! ॥ ९७ ॥

अथ शीतपूतनाग्रहजुष्टचिकित्सामाह—

गोमूत्रं चाश्वमूत्रश्च मुस्तां चामरदारु च ।

कुष्ठञ्च सर्वगन्धांश्च तैलार्थमवधारयेत् ॥ ९८ ॥

*सर्वगन्धान्=चन्दनादीन् ॥ ९८ ॥

रोहिणीनिम्बखदिरपलाशककुभत्वचः ।

निकाथ्य तस्मिन्निःक्वाथे सक्षीरे विपचेद् घृतम् ॥ ९९ ॥

गृध्रोलुकपुरीषाणि वस्तगन्धामहित्वचम् ।

निम्बपत्राणि च तथा धूपनार्थं समाहरेत् ॥ १०० ॥

धारयेदपि गुञ्जां च बलां काकादनीं तथा ।

नद्यां मुद्गौदनैश्चापि तर्पयेच्छीतपूतनाम् ॥ १०१ ॥

जलाशयान्ते बालस्य स्नपनं चोपदिश्यते ॥ १०२ ॥

*जलाशयान्ते=जलाशयतीरे ॥ १०२ ॥

देव्यै देयश्चोपहारो वारुणी रुधिरं तथा ।

मुद्गौदनाशिनी देवी सुराशोणितपायिनी ।

जलाशयरता नित्यं पातु त्वां शीतपूतना ॥ १०३ ॥

अथ मुखमण्डिकाग्रहजुष्टचिकित्सामाह—

कपित्थं बिल्वतर्कारीवासा गन्धर्वहस्तकः ।

कुबेराक्षी च योज्याः स्युर्बालानां परिषेचने ॥ १०४ ॥

*तर्कारी="गनियार" इति लोके । गन्धर्वहस्तकः=श्वेत एर-
ण्डः । कुबेराक्षी="पाडहि" ( पाढ़ल ) इति लोके ॥ १०४ ॥

स्वरसैर्भृङ्गवृक्षाणां तथैव हयगन्धया ।

तैलं वचां च संयोज्य पचेदभ्यञ्जनं शिशोः ॥ १०५ ॥

*भृङ्गवृक्षः "भगेरा" इति लोके ॥ १०५ ॥

वचा सर्जरसं कुष्ठं सर्पिश्चोद्धूपने हितम् ।

वर्णकं चूर्णकं माल्यमञ्जनं पारदं तथा ॥ १०६ ॥

मनःशिलां चोपहरेद् गोष्ठमध्ये बलिं ततः ॥ १०७ ॥

पायसं सपुरोडाशं तद्बल्यर्थमुपाहरेत् ।

मन्त्रपूताभिरद्भिश्च तत्रैव स्नपनं हितम् ॥ १०८ ॥

अथ जलाभिमन्त्रणमन्त्रमाह—

अलङ्कृता कामवती सुभगा कामरूपिणी ।

गोष्ठमध्यालया या तु पातु त्वां मुखमण्डिका ॥ १०९ ॥

अथ नैगमेयग्रहजुष्टचिकित्सामाह—

बिल्वाग्निमन्थपूतीकैः कार्यं स्यात्परिषेचितम् ॥ ११० ॥

*पूतीकः=घोराकरञ्जः ॥ ११० ॥

प्रियङ्गुसरलानन्ताशतपुष्पाकुटन्नटैः।
पचेत्तैलं सगोमूत्रं दधिमस्त्वम्लकाञ्जिकैः ॥ १११ ॥

*कुटन्नटं=वितुन्नकनाम्नो वृक्षविशेषस्य त्वक् "गुडतजी" इति लोके। मुस्ताकृतिः-श्योनाकं वा ॥ १११ ॥

वचां वयस्यां जटिलां गोलोमीञ्चापि धारयेत् ॥ ११२ ॥

*वयस्या=आमलकी गुडूची वा। जटिला=जटामांसी, "मिसिशोथा" इति लोके। गोलोमी=श्वेतवचा ॥ ११२ ॥

उत्सादनं हितञ्चात्र स्कन्दापस्मारनाशनम्।
मर्कटोलूकगृध्राणां पुरीषाणि प्रधूपनम्।
धूमः सुतजने कार्यो बालस्य हितमिच्छता।
तिलतण्डुलकं माल्यं भक्ष्यांश्च विविधानपि।
कौमारभृत्ये मेषाय प्लक्षमूले निवेदयेत् ॥ ११३ ॥

*कौमारभृत्ये=बालरक्षायाम्। मेषाय=नैगमेयग्रहाय ॥ ११३ ॥

अधस्तात्क्षीरवृक्षस्य स्नपनञ्चोपदिश्यते ॥ ११४ ॥
अजाननश्चलाक्षिभ्रूः कामरूपी महायशाः।
बालपालयिता देवो नैगमेयोऽभिरक्षतु ॥ ११५ ॥

अथ बालरोगाणां निदानलक्षणमाह—

धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा।
दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति ॥ ११६ ॥
मिथ्याऽऽहारविहारिण्या दुष्टा वातादयस्त्रयः।
दूषयन्ति पयस्तेन जायन्ते व्याधयः शिशोः ११७ ॥
( ह्रीबेरं शर्कराक्षौद्रं लीढं तृष्णाहरं परम्। )
वातदुष्टं शिशुः स्तन्यं पिबन्वातगदातुरः ॥ ११८ ॥
क्षामस्वरः कृशाङ्गः स्याद् बद्धविण्मूत्रमारुतः।
स्विन्नो भिन्नमलो बालः कामलापित्तरोगवान् ॥ ११९ ॥

तृष्णालुरुष्णसर्वाङ्गः पित्तदुष्टं पयः पिबन् ।
श्लेष्मदुष्टं पिबन्क्षीरं लालालुः श्लेष्मरोगवान् ॥ १२० ॥
निद्राऽर्दितो जडः शूनो रक्ताक्षश्छर्दनः शिशुः ।
द्वन्द्वजे द्वन्द्वजं रूपं सर्वजे सर्वलक्षणम् ॥ १२१ ॥
ज्वराद्या व्याधयः सर्वे महतां ये पुरेरिताः ।
बालानामपि ते तद्वद् बोद्धव्या भिषगुत्तमैः ॥ १२२ ॥
बालानामेव ये रोगा भवन्ति महतां न च ।
तालुकण्टकमुख्यांस्तानवधारय यत्नतः ॥ १२३ ॥

तत्रादौ तालुकण्टकलक्षणमाह—

तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम् ।
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥ १२४ ॥
तालुपातः स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम् ।
तृडक्षिकण्ठास्यरुजा ग्रीवादुर्बलता वमिः ॥ १२५ ॥

*पानं स्तनस्य, शकृद्द्रवं=द्रवरूपम् ॥ १२५ ॥

अथ महापद्मकलक्षणमाह—

वीसर्पस्तु शिशोः प्राणनाशनः शीर्षवस्तिजः ।
पद्मवर्णो महापद्मरोगो दोषत्रयोद्भवः ।
शङ्खाभ्यां हृदयं याति हृदयाच्च गुदं व्रजेत् ॥ १२६ ॥

*पद्मवर्णः=लोहितवर्णः, तत्र शीर्षजो वीसर्पः । शङ्खाभ्यां हृदयं याति हृदयाच्च गुदं व्रजेत । एवं वस्तिजो गुदं याति गुदतो हृदयं, हृदयाच्छिरो यातीति बोद्धव्यम् ॥ १२६ ॥

अथ कुकूणकलक्षणमाह—

कुकूणकं क्षीरदोषाच्छिशूनामेव वर्त्मनि ।
जायते सरुजं नेत्रं कण्डूरं प्रस्रवेद् बहु ॥ १२७ ॥
शिशुः कुर्याल्ललाटाक्षिकूटनासाप्रघर्षणम् ।
शक्तो नार्कप्रभां द्रष्टुं न चाक्ष्युन्मीलनक्षमः ॥ १२८ ॥

*कुकूणकं="कोथुआह" इति लोके ॥ १२७-१२८ ॥

अथ तुण्डिगुदपाकयोर्लक्षणमाह—

वातेनाध्मापिता नाभिः सरुजा तुण्डिरुच्यते ।

वालस्य गुदपाकाख्यो व्याधिः पित्तेन जायते ॥ १२९ ॥

अथाहिपूतनलक्षणमाह—

शकृन्मूत्रसमायुक्ते धौतेऽपाने शिशोर्भवेत् ।
स्विन्ने वा स्नाप्यमानस्य कण्डू रक्तकफोद्भवा ॥ १३० ॥
कण्डूयनात्ततः क्षिप्रं स्फोटाः स्रावश्च जायते ।
एकीभूतं व्रणं घोरं तं विद्यादहिपूतनम् ॥ १३१ ॥

*स्विन्ने=स्वेदिते ॥ १३०-१३१ ॥

अथाजगल्लिकालक्षणमाह—

स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा ।
कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥ १३२ ॥

अथ पारिगर्भिकलक्षणमाह—

मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि ।
कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः ॥ १३३ ॥
युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिकम् ।
रोगं परिभवाख्यं च तत्र युञ्जीत दीपनम् ॥ १३४ ॥

*"पिबन्नपी"त्यपिशब्दादपिबन्नपि । पारिगर्भिकः="अहीडी"ति लोके । परिभवाख्यं=परिभवेति नामान्तरम् ॥ १३३-१३४ ॥

अथ दन्तोद्भेदजरोगानाह—

दन्तोद्भेदः शिशोः सर्वरोगाणां कारणं स्मृतम् ।
विशेषाज्ज्वरविड्भेदकासच्छर्दिशिरोरुजाम् ॥ १३५ ॥
अभिष्यन्दस्य पोथक्या विसर्पस्य च जायते ॥ १३६ ॥

*कारणमित्यन्वयः । पोथक्याः=वर्त्मरोगविशेषस्य ॥ १३५-१३६ ॥

अथ बालरोगचिकित्सामाह—

भैषज्यं पूर्वमुद्दिष्टं महतां यज्ज्वरादिषु ।
तदेव कार्यं बालानां किन्तु दाहादिकं विना ॥ १३७ ॥

*दाहादिकं विना=अग्निदाहादिक्षारवमनविरेचनशिराव्यधादिकं विना । महाकष्टे चोत्पन्ने वमनविरेकाद्यपि दद्यात् । यत आह सुश्रुतः—
*"विरेकवस्तिवमनानृते कुर्याच्च नात्ययादि"ति ।
*अत्ययात्=विनाशकरकष्टात् । ऋते=विना ॥ इति ॥ १३७ ॥

त एव दोषाः दूष्याश्च ज्वराद्या व्याधयश्च ते ।
अतस्तदेव भैषज्यं मात्रा तत्र कनीयसी ॥ १३८ ॥

अथ बालस्य कनीयसीं मात्रामाह विश्वामित्रः—

विडङ्गफलमात्रं तु जातमात्रस्य भेषजम् ।
अनेनैव प्रमाणेन मासि मासि प्रवर्द्धयेत् ॥ १३९ ॥

*विडङ्गपरिमितं भेषजं चूर्णीकृत्य किंवा कल्कीकृत्याथवाऽऽवलेहीकृत्य दद्यादित्यर्थः । तन्त्रान्तरे त्वन्यथाऽभिहितम् ॥ १३९ ॥

प्रथमे मासि बालाय देया भैषज्यरक्तिका ।
अवलेह्या तु कर्त्तव्या मधुक्षीरसिताघृतैः ॥ १४० ॥
एकैकां वर्द्धयेत्तावद्यावत्संवत्सरो भवेत् ।
तदूर्ध्वं माषवृद्धिः स्याद्यावत्षोडश वत्सराः ॥ १४१ ॥

*एकैकां रक्तिकां, तदूर्ध्वं=वर्षोपरि, माषवृद्धिः । प्रतिवर्षं पञ्चगुञ्जात्मकस्य माषस्य वृद्धिर्भवति । "गुञ्जाः पञ्चाद्यमाषक" इत्यमरसिंहः ॥ १४१ ॥

ततः स्थिरा भवेत्तावद्यावद्वर्षाणि सप्ततिः ।
ततो बालकवन्मात्रा ह्रासनीया शनैः शनैः ॥ १४२ ॥

*ततः=षोडशवत्सरोपरि ॥ १४२ ॥

चूर्णकल्कावलेहानामियं मात्रा प्रकीर्त्तिता ।
कषायस्य पुनः सैव विज्ञातव्या चतुर्गुणा ॥ १४३ ॥
क्षीरपस्य शिशोर्देयमौषधं क्षीरसर्पिषा ।
धात्र्यास्तु केवलं देयं न क्षीरेणापि सर्पिषा ॥ १४४ ॥

*क्षीरान्नादस्य पूर्ववत्क्षीरसर्पिषा ॥ १४४ ॥

अथ प्रकारान्तरेणौषधोपायनमाह सुश्रुतः—

येषां गदानां ये योगाः प्रवक्ष्यन्तेऽगदङ्कराः ।
तेषु तत्कल्कसंलिप्तौ पाययेच्च शिशुं स्तनौ ॥ १४५ ॥

अथानभिभाषिबालस्यान्तर्गतरोगज्ञानोपायमाह—

अङ्गप्रत्यङ्गदेशे तु रुजा यत्रास्य जायते ।
मुहुर्मुहुः स्पृशति तं स्पृश्यमानेन रोदिति ॥ १४६ ॥
निमीलिताक्षो मूर्द्धस्थे रोगे नो धारयेच्छिरः ।

वस्तिस्थे मूत्रसङ्गार्त्तः क्षुधा तृडपि गच्छति ॥ १४७ ॥
विण्मूत्रसङ्गवैकल्याच्छर्द्याध्मानान्त्रकूजनैः ।
कोष्ठे व्याधीन्विजानीयात्सर्वत्रस्थांश्च रोदनैः ॥ १४८ ॥

अथ बालकस्य ज्वरादिरोगचिकित्सामाह—

सर्वं निवार्यते बाले स्तन्यं नैव निवार्यते ।
मात्रया लङ्घयेद्धात्रीं शिशोरेतद्धि लङ्घनम् ॥ १४९ ॥

*मात्रया लङ्घयेद् = लघु भोजयेत् ॥ १४९ ॥

अथ सर्वज्वरेषु भद्रमुस्ताऽऽदिक्वाथमाह—

भद्रमुस्ताऽभयानिम्बपटोलमधुकैः कृतः ।
क्वाथः कोष्णः शिशोरेष निःशेषज्वरनाशनः ॥ १५० ॥

अथ ज्वरातिसारे चतुर्भद्रावलेहमाह—

घनकृष्णाऽरुणाशृङ्गीचूर्णं क्षौद्रेण संयुतम् ।
शिशोर्ज्वरातिसारघ्नं कासं श्वासं वमिं हरेत् ॥ १५१ ॥

*अरुणा = अतिविषा ॥ १५१ ॥

अथातिसारे बिल्वादिक्वाथमाह—

बिल्वं च पुष्पाणि च धातकीनां जलं सलोध्रं गजपिप्पली च ।
क्वाथावलेहौ मधुना विमिश्रौ बालेषु योज्यावतिसारितेषु ॥ १५२

*जलम् = [ बाला ] ॥ १५२ ॥

अथ दुर्धरातिसारे समङ्गाऽऽदिक्वाथमाह—

समङ्गाधातकीलोध्रसारिवाभिः शृतं जलम् ।
दुर्धरेऽपि शिशोर्देयमतीसारे समाग्निकम् ॥ १५३ ॥

*समङ्गा = लज्जालुमूलम् ॥ १५३ ॥

अथामातीसारे विडङ्गादिचूर्णमाह—

विडङ्गान्यजमोदा च पिप्पलीतण्डुलानि च ।
एषामालोड्य चूर्णानि सुखं तप्तेन वारिणा ।
आमे प्रवृत्तेऽतीसारे कुमारं पाययेद्भिषक् ॥ १५४ ॥

अथ रक्तातीसारे मोचारसादियवागूमाह—

मोचारसः समङ्गा च धातकी पद्मकेशरम् ।
पिष्टैरेतैर्यवागूः स्याद्रक्तातीसारनाशिनी ॥ १५५ ॥

१ *मोचारसं लज्जालुमूलं, धातकीपुष्पम् , कमलकेशरमेतेषां समुदितं तोलकैकम्। गृह्णीयात्। तण्डुलाः सपादतोलकाः १।, जलमेकादशतोलकम् ११। सर्वमेकीकृत्य यवागूः साधनीया ॥ १५५ ॥

अथातीसारे नागरादिक्वाथमाह—

नागरातिविषामुस्तवालकेन्द्रयवैः श्रृतम्।
कुमारं पाययेत्प्रातः सर्वातीसारनाशनम् ॥ १५६ ॥

अथ प्रवाहिकायां लाजाऽऽदिचूर्णमाह—

लाजा सयष्टीमधुका शर्करा क्षौद्रमेव च।
तण्डुलोदकयोगेन क्षिप्रं हन्ति प्रवाहिकाम् ॥ १५७ ॥

अथ ग्रहण्यादिरोगे रजन्यादिचूर्णमाह—

रजनी सरलो दारु बृहती गजपिप्पली।
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ॥ १५८ ॥
दीपनं ग्रहणीं हन्ति मारुतार्त्तिं सकामलाम्।
ज्वरातीसारपाण्डुघ्नं बालानां सर्वरोगनुत् ॥ १५९ ॥

अथ कासघ्नं मुस्तकादिस्वरसमाह—

मुस्तकातिविषावासाकणाश्रृङ्गीरसं लिहेत्।
मधुना मुच्यते बालः कासैः पञ्चभिरुत्थितैः ॥ १६० ॥

अथ बालकानां पुराणकासोपरि केशरावलेहिकामाह—

व्याघ्री सुमनसं जातीकेशरैरवलेहिका।
मधुना चिरसञ्जाताञ्छिशोः कासान्व्यपोहति ॥ १६१ ॥

अथ कासश्वासे धान्यादिपानमाह—

धान्यं च शर्करायुक्तं तण्डुलोदकसंयुतम्।
पानमेतत्प्रदातव्यं कासश्वासापहं शिशोः ॥ १६२ ॥

अथ द्राक्षाऽऽदिचूर्णमाह—

द्राक्षावासाऽभयाकृष्णाचूर्णं क्षौद्रेण सर्पिषा।
लीढं श्वासं निहन्त्याशु कासञ्च तमकं तथा ॥ १६३ ॥

*तमकं=श्वासभेदम् ॥ १६३ ॥

अथ हिक्कावमिघ्नं कटुकरोहिण्यवलेहमाह—

चूर्णं कटुकरोहिण्या मधुना सह योजयेत्।

हिक्कां प्रशमयेत्क्षिप्रं छर्दिं चापि चिरोत्थिताम् ॥ १६३ ॥

अथ दुग्धवमिघ्नमवलेहमाह—

आम्रास्थिलाजसिन्धूत्थं सक्षौद्रं छर्दिनुद्भवेत् ॥ १६५ ॥
ऋद्धिं पीतं तु मेध्यन्तु स्तन्येन मधुसर्पिषा ।
द्विवार्त्ताकीफलरसं पञ्चकोलञ्च लेहयेत् ॥ १६६ ॥
*द्विवार्त्ताकी=बृहतीद्वयम् ॥ १६४ ॥

पञ्चकोलं यथा—

पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् ॥ १६७ ॥

अथानाहे वातशूले च सैन्धवाद्यवलेहमाह—

घृतेन सिन्धुविश्वैलाहिङ्गुभार्गीरजो लिहन् ।
आनाहं वातिकं शूलं हन्यात्तोयेन वा शिशुः ॥ १६८ ॥

अथ मूत्राघातघ्नं कणाऽऽद्यवलेहमाह—

कणोषणासिताक्षौद्रसूक्ष्मैलासैन्धवैः कृतः ।
मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तमः ॥ १६९ ॥

अथ कार्श्यहरयोगमाह—

यदा तु दुर्बलो बालः खादन्नपि च वह्निमान् ।
विदारीकन्दगोधूमयवचूर्णं घृतप्लुतम् ।
खादयेत्तदनु क्षीरं शृतं समधुशर्करम् ॥ १७० ॥

अथ शोथघ्नलेपमाह—

मुस्तं कूष्माण्डबीजानि भद्रदारुकलिङ्गकान् ।
पिष्ट्वा तोयेन संलिप्तं लेपोऽयं शोथहृच्छिशोः ॥ १७१ ॥

अथ क्षतविसर्पविस्फोटज्वरहरक्वाथमाह—

पटोलत्रिफलाऽरिष्टहरिद्राक्वथितं पिबेत् ।
क्षतवीसर्पविस्फोटज्वराणां शान्तये शिशुः ॥ १७२ ॥

अथ मुखस्रावहरक्वाथमाह—

सारिवातिललोध्राणां कषायो मधुकस्य च ।
संस्राविणि मुखे शस्तो धावनार्थं शिशोः सदा ॥ १७३ ॥

अथ मुखपाकहरप्रलेपमाह—

अश्वत्थत्वग्दलक्षौद्रैर्मुखपाके प्रलेपनम् ॥ १७४ ॥

अथ बालानां रोदने चूर्णमाह—

पिप्पलीत्रिफलाचूर्णं घृतक्षौद्रपरिप्लुतम्।
बालो रोदिति यस्तस्मै लीढं दद्यात्सुखावहम्॥ १७५॥

अथ तालुकण्टकघ्नकल्कमाह—

हरीतकी वचा कुष्ठं कल्कं माक्षिकसंयुतम्।
पीत्वा कुमारः स्तन्येन मुच्यते तालुकण्टकात्॥ १७६॥

अथ कुकूणकहरलेपमाह—

फलत्रिकं लोध्रपुनर्नवे च सशृङ्गवेरं बृहतीद्वयं च।
आलेपनं श्लेष्महरं सुखोष्णं कुकूणके कार्यमुदाहरन्ति॥१७७॥

अथ नाभिशोथघ्नं स्वेदमाह—

मृत्पिण्डेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा।
स्वेदयेदुत्थितां नाभिं शोथस्तेनोपशाम्यति॥ १७८॥

अथ नाभिपाकघ्नतैलमवधूलनं चाह—

नाभिपाके निशालोध्रप्रियङ्गुमधुकैः शृतम्।
तैलमभ्यञ्जने शस्तमेभिश्चाप्यवधूलनम्॥ १७९॥
दग्धेन छागशकृता नाभिपाकेऽवचूर्णनम्।
त्वक्चूर्णैः क्षीरिणां वाऽपि कुर्याच्चन्दनरेणुना॥ १८०॥

अथ गुदपाकघ्नयोगमाह—

गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम्।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम्।
शङ्खयष्ट्यञ्जनैश्चूर्णं शिशूनां गुदपाकनुत्॥ १८१॥
*अञ्जनं = रसाञ्जनम्॥ १८१॥

अथाहिपूतने लेपमाह—

शङ्खसौवीरयष्ट्याह्वैर्लेपो देयोऽहिपूतने॥ १८२॥

अथ पारिगर्भिकोपायमाह—

पारिगर्भिकरोगे तु युज्यते वह्निदीपनम्॥ १८३॥

अथ बालानां दन्तोद्भेदजरोगशमोपायमाह—

दन्तपालीं तु मधुना चूर्णेन प्रतिसारयेत्।
धातकीपुष्पपिप्पल्योर्धात्रीफलरसेन वा॥ १८४॥

दन्तोत्थानभवा रोगाः पीडयन्ति न बालकम् ।
जाते दन्ते हि शाम्यन्ति यतस्तद्धेतुका गदाः ॥ १८५ ॥

अथ बालानां शक्तिवर्द्धकप्रयोगानाह—

सौवर्णसुकृतं चूर्णं कुष्ठं मधु घृतं वचा ।
मत्स्याक्षकं शङ्खपुष्पी मधु सर्पिः सकाञ्चनम् ॥
अर्कपुष्पी मधु घृतं चूर्णितं कनकं वचा ।
सहेमचूर्णं कैटर्यं श्वेता दूर्वा घृतं मधु ॥ १८६ ॥
चत्वारोऽभिहिताः प्राशा अर्द्धश्लोकसमापनाः ।
कुमाराणां वपुर्मेधाबलपुष्टिकराः स्मृताः ॥ १८७ ॥

*सौवर्णं चूर्णं=चतुर्ष्वपि योगेषु मारितसुवर्णचूर्णम् । मत्स्याक्षकं="ब्राह्मी" इति लोके, "वकम" इत्येके । अर्कपुष्पी=अर्कसदृशपुष्पी लता । कैटर्यं=कट्फलम् । दूर्वा=श्वेतदूर्वा । संवत्सरं यावदेते योगाः प्रयोज्याः, "द्वादशवर्षाणी"ति केचित् ॥ १८५-१८७ ॥

अथ लाक्षाऽऽदितैलमाह—

लाक्षारसे समे तैलं मस्तुन्यथ चतुर्गुणे ।
रास्नाचन्दनकुष्ठाह्वावाजिगन्धानिशायुतैः ॥ १८८ ॥
शताह्वादारुयष्ट्याह्वमूर्वातिक्ताहरेणुभिः ।
संसिद्धं ज्वररक्षोघ्नं बलवर्णकरं शिशोः ॥ १८९ ॥

इति श्रीमिश्रलटकनतनयश्रीमन्मिश्रभावविरचिते भावप्रकाशे

सप्ततितमो बालरोगाधिकारः समाप्तः ॥ ७० ॥

---

मध्यमखण्डं समाप्तम् ॥

# भावप्रकाशः

## अथोत्तरखण्डम् ।

तत्र

## एकसप्ततितमो वाजीकरणाधिकारः ॥ ७१ ॥

अथ वाजीकरणस्य लक्षणमाह—

यद् द्रव्यं पुरुषं कुर्याद्वाजीव सुरतक्षमम् ।
तद्वाजीकरमाख्यातं मुनिभिर्भिषजां वरैः ॥ १ ॥

तत्र प्रसङ्गात् क्लैब्यस्य लक्षणं संख्यां निदानं चाह—

क्लीबः स्यात्सुरताशक्तस्तद्भावः क्लैब्यमुच्यते ।
तच्च सप्तविधं प्रोक्तं निदानं तस्य कथ्यते ॥ २ ॥
तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते ।
ध्वजः पतत्यतो नृणां क्लैब्यं समुपजायते ।
द्वेष्यस्त्रीसम्प्रयोगाच्च क्लैब्यं तन्मानसं स्मृतम् ॥ ३ ॥

*तैस्तैर्भावैः=भयशोकक्रोधादिभिः । अहृद्यैः=हृदयाहितैः, दुःखकरत्वात् । क्षते=पीडिते, अस्वस्थीकृत इति यावत् । ध्वजः=शिश्नः । तथा च—

*"ध्वजं चिह्ने पताकायां मेहने शौण्डिकेऽपि च" इति विश्वप्रकाशः । पतति—न तून्नमति । सम्प्रयोगो=मैथुनम् ॥ २-३ ॥

कटुकाम्लोष्णलवणैरतिमात्रोपसेवितैः ।
पित्ताच्छुक्रक्षयो दृष्टः क्लैब्यं तस्मात्प्रजायते ॥ ४ ॥

*कटुकादिनाऽतिमात्रेण प्रवृद्धेन पित्तेन शुक्रस्य दग्धत्वात्क्लैब्यं भवति पित्तजमिति द्वितीयम् ॥ ४ ॥

अतिव्यवायशीलो यो न च वाजीक्रियारतः ।
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् ॥ ५ ॥

*शुक्रक्षयेण तृतीयम् ॥ ५ ॥

महता मेढ्ररोगेण चतुर्थी क्लीबता भवेत् ।
वीर्यवाहिशिराच्छेदान्मेहनानुन्नतिर्भवेत् ॥ ६ ॥
बलिनः क्षुब्धमनसो निरोधाद् ब्रह्मचर्यतः ।
षष्ठं क्लैब्यं स्मृतं तत्तु शुक्रस्तम्भनिमित्तकम् ॥ ७ ॥

*बलिनः=पुष्टस्य । क्षुब्धमनसः=कामात्संचलितमनसः । ब्रह्मचर्यम्=अमैथुनं, तस्मान्निरोधाच्छुक्रस्य क्लैब्यं भवति ॥ ७ ॥

जन्मप्रभृति यत्क्लैब्यं सहजं तद्धि सप्तमम् ॥ ८ ॥

अथासाध्यक्लैब्यमाह—

असाध्यं सहजं क्लैब्यं मर्मच्छेदाच्च यद्भवेत् ॥ ९ ॥

*यद् मर्मच्छेदाद्=वीर्यवाहिशिराच्छेदात् ॥ ९ ॥

अथ क्लैब्यस्य चिकित्सायां सामान्यविधिमाह—

क्लैब्यानामिह साध्यानां कार्यो हेतुविपर्ययः ।
मुख्यं चिकित्सितं यस्मान्निदानपरिवर्जनम् ॥ १० ॥

अथ क्लैब्यस्य चिकित्सायां वाजीकरणविधिमाह—

नरो वाजीकरान्योगान्सम्यक्छुद्धो निरामयः ।
सप्तत्यन्तं प्रकुर्वीत वर्षादूर्ध्वं तु षोडशात् ॥ ११ ॥
न च वै षोडषादर्वाक्सप्तत्याः परतो न च ।
आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति ॥ १२ ॥
क्षयवृद्ध्युपदंशाद्या रोगाश्चातीव दुर्जयाः ।
अकालमरणञ्च स्याद्भजतः स्त्रियमन्यथा ॥ १३ ॥

*स्त्रीभजनविधिर्विस्तरतो रात्रिचर्यायां लिखितोऽस्ति, तत्र द्रष्टव्यः ॥ १३ ॥

विलासिनामर्थवतां रूपयौवनशालिनाम् ।
नराणां बहुभार्याणां विधिर्वाजीकरो हितः ॥ १४ ॥
स्थविराणां रिरंसूनां स्त्रीणां वाल्लभ्यमिच्छताम् ।
योषित्प्रसङ्गात्क्षीणानां क्लीबानामल्परेतसाम् ॥ १५ ॥
हिता वाजीकरा योगाः प्रीणयन्ति बलप्रदाः ।
एतेऽपि पुष्टदेहानां सेव्याः कालाद्यपेक्षया ॥ १६ ॥

अथ वाजीकरणवस्तून्याह—

भोजनानि विचित्राणि पानानि विविधानि च।
गीतं श्रोत्राभिरामाश्च वाचः स्पर्शसुखास्तथा ॥ १७ ॥
कामिनी सान्द्रतिलका कामिनी नवयौवना।
गीतं श्रोत्रमनोज्ञञ्च ताम्बूलं मदिरा स्रजः ॥ १८ ॥
गन्धा मनोज्ञा रूपाणि चित्राण्युपवनानि च।
मनसश्चाप्रतीघातो वाजीकुर्वन्ति मानवम् ॥ १९ ॥
माक्षीकधातुमधुपारदलोहचूर्ण-
पथ्याशिलाजतुविडङ्गघृतानि लिह्यात्।
एकाग्रविंशतिदिनानि गदार्दितोऽपि
साशीतिकोऽपि रमयेत्प्रमदां युवेव ॥ २० ॥
सत्त्वं गुडूच्या गगनं सलोध्रमेलासितामागधिकासमेतम्।
एतत्समेतं मधुनाऽवलीढं रामाशतं सेवयतीव षण्डः ॥ २१ ॥
गवां विरूढवत्सानां सिद्धं पयसि पायसम्।
गोधूमचूर्णञ्च तथा सितामधुघृतान्वितम्।
भुक्त्वा हृष्यति जीर्णोऽपि दश दारान्व्रजत्यपि ॥ २२ ॥

अथ वाजीकररसालामाह—

दध्नोऽर्द्धाढकमीषदम्लमधुरं खण्डस्य चन्द्रद्युतेः-
प्रस्थं क्षौद्रपलं पलञ्च हविषः शुण्ठ्याश्च माषाष्टकम्।
तद्वन्माषचतुष्टयं मरिचतः कर्षं लवङ्गं तथा
धृत्वा शुक्लपटे शनैः करतलेनोन्नाम्य विस्रावयेत् ॥ २३ ॥
मृद्भाण्डे मृगनाभिचन्दनरसासृष्टेऽगुरुद्धूपिते
कर्पूरेण सुगन्धितं तदखिलं संलोड्य संस्थापयेत्।
स्वस्यार्थे मकरेश्वरेण रचिता ह्येषा रसाला स्वयं-
भोक्तुर्मन्मथदीपनी सुखकरी कान्तेव नित्यं प्रिया ॥ २४ ॥

अथ रतिवर्द्धनयोगाः।

तत्र गोक्षुरादिमोदकमाह—

गोक्षुरेक्षुरबीजानि वाजिगन्धा शतावरी।
मुशली वानरीबीजं यष्टी नागबला बला ॥ २५ ॥

एषां चूर्णं दुग्धसिद्धं गव्येनाज्येन भर्जितम् ।
सितया मोदकं कृत्वा भक्ष्यं वाजीकरं परम् ॥ २६ ॥
चूर्णादष्टगुणं क्षीरं घृतं चूर्णसमं स्मृतम् ।
सर्वतो द्विगुणं खण्डं खादेदग्निबलं यथा ॥ २७ ॥
वाजीकराणि भूरीणि संगृह्य रचितो यतः ।
तस्माद्बहुषु योगेषु योगोऽयं प्रवरो मतः ॥ २८ ॥

अथ मदनमञ्जरीवटीमाह—

चत्वारो व्योमभागास्तदनु निगदितं भागयुग्मञ्च बङ्ग-
भागैकं शम्भुबीजं त्रितयमपि मृतं तत्समा सिद्धमूली ।
चातुर्जातं सजातीफलमरिचकणा नागरं देवपुष्पं-
जातीपत्रञ्च भागद्वितयमपि पृथक्सर्वमेकत्र चूर्ण्यम् ॥२९॥
सर्वद्व्यंशा सिता स्याद्घृतमधुसहितं मोदकीकृत्य चैतत्-
खादेदग्निं समीक्ष्य प्रसभमभिनवानन्दसम्बर्द्धनाय ।
योगो वाजीकराख्योऽयमिह निगदितो भैरवानन्दनाम्ना
निःशेषव्याधिहन्ता दलितबहुवधूदामकन्दर्पदर्पः ॥ ३० ॥

अथ बस्ताण्डकच्छपाण्डयोर्वाजीकरयोगावाह—

पिप्पलीलवणोपेते बस्ताण्डे घृतसाधिते ।
कच्छपस्याथवा खादेत्तत्तु वाजीकरं भृशम् ॥ ३१ ॥

अथ श्रीरतिवल्लभपूगपाकमाह—

पूगं दक्षिणदेशजं दशपलोन्मानं भृशं कर्त्तयेत्-
तत्स्विन्नं जलयोगतो मृदुतरं सङ्कुट्य चूर्णीकृतम् ।
तच्चूर्णं पटशोधितं वसुगुणे गोशुद्धदुग्धे पचेद्-
द्रव्याज्याञ्जलिसंयुतेऽतिनिबिडे दद्यात्तुलार्द्धां सिताम् ॥३२॥
पक्वं तज्ज्वलनात्क्षितिं प्रति नयेत्तस्मिन्पुनः प्रक्षिपेद्-
यद्यत्तत्तदुदाहरामि बहुला दृष्ट्वाऽऽदरात्संहिताः ।
एला नागबला बला सचपला जातीफला लिङ्गका
जातीपत्रसुपत्रपत्रकयुतं तच्च त्वचा संयुतम् ॥ ३३ ॥
विश्वावीरणवारिवारिदवरा वांशी वरी वानरी

द्राक्षा सेक्षुरगोक्षुराऽथ महती खर्जूरिका क्षीरिका।
धान्याकं सकशेरुकं समधुकं शृङ्गाटकं जीरकं
पृथ्वीकाऽथ यवानिका वरटिका मांसी मिसी मेथिका ॥३४॥
कन्देष्वत्र विदारिकाऽथ मुशली गन्धर्वगन्धा तथा
कर्चूरं करिकेशरं समरिचं चारस्य बीजं नवम्।
बीजं शाल्मलिसम्भवं करिकणाबीजञ्च राजीवजं
श्वेतं चन्दनमत्र रक्तमपि च श्रीसंज्ञपुष्पैः समम् ॥ ३५ ॥
सर्वञ्चेति पृथक्पृथक्पलमितं सञ्चूर्ण्य तत्र क्षिपेत्
सूतं वङ्गभुजङ्गलोहगगनं सम्मारितं स्वेच्छया।
कस्तूरीघनसारचूर्णमपि च प्राप्तं यथा प्रक्षिपेत्
पश्चादस्य तु मोदकान्विरचयेद् बिल्वप्रमाणानथ ॥ ३६ ॥
तान्भुक्त्वाऽति सदा यथाऽनलबलं भुञ्जीत नाम्लं रसं
पूर्वस्मिन्नशिते गते परिणतिं प्राग्भोजनाद्भक्षयेत्।
नित्यं स्त्रीरतिवल्लभाख्यकमिमं पूगस्य पाकं भजेत्
स स्याद्वीर्यविवृद्धिवृद्धमदनो वाजीव शक्तो रतौ ॥ ३७ ॥
दीप्ताग्निर्बलवान्वलीविरहितो हृष्टः स पुष्टः सदा
वृद्धो योऽपि युवेव सोऽपि रुचिरः पूर्णेन्दुवत्सुन्दरः ॥३८॥

*वसुगुणे = अष्टगुणे। अञ्जलिः = अर्द्धशरावः। तुलाऽर्द्धं = पञ्चाशत्पलानि, यतः—

*"द्विपञ्चाशत्पलानामभिदधति तुलां संहिताः सुश्रुताद्याः"। इति।

*नागबला = (गुलशकरी)। बला = (बरिआरा) तस्या-मूलम्। जातीपत्रं = "कञाइपत्री" इति लोके। विश्वा = शुण्ठी। वीरणम् = उशीरं ग्राह्यम्। वारि = "सुगन्धवाला" इति लोके। वारिदः = मुस्तकः। वरा = त्रिफला। वांशी = वंशलोचना। वरी = शतावरी। वानरी = कपिकच्छुः। इक्षुरः = कोकिलाक्षस्तस्य बीजं ग्राह्यम्। गोक्षुरस्य च बीजम्। महती = महाखर्जूरिका। क्षीरिका = क्षीरी। पृथ्वीका = "कलौञ्जी"ति लोके। वरटी (वराटिका) =

*'शालूकमेषां कन्दः स्याद् बीजकोशो वराटिका' ॥ १ ॥

*मांसी=जटामासी। मिसिः=शतपुष्पा (सौंफ)। गन्धर्व-गन्धा=अश्वगन्धा तस्या मूलम्। श्रीसंज्ञं=लवङ्गम्। घनसारः=कर्पूरः। बिल्वप्रमाणान्=पलप्रमाणान् ॥ ३२–३८ ॥

अथ कामेश्वरमोदकमाह—

एतस्मिन् रतिवल्लभे यदि पुनः सम्यक्सुरा शाणिका
धत्तूरस्य च बीजमर्ककरभः पाथोऽब्धिशोषस्तथा।
सन्माजूफलकं तथा खसफलन्त्वक्कार्षिकान् निक्षिपे-
च्चूर्णार्द्धां विजया तदा स हि भवेत्कामेश्वरो मोदकः ॥३९॥

अथ महाखण्डकूष्माण्डावलेहोपयोगमाह—

रक्तपित्ताधिकारोक्तः खण्डकूष्माण्डको महान्।
रक्तपित्तादिरोगघ्नो महावाजीकरः स्मृतः ॥ ४० ॥

अथाम्रपाकमाह—

पक्वाम्रस्य रसद्रोणे सितामाढकसम्मिताम्।
घृतं प्रस्थमितं दद्यान्नागरस्य पलाष्टकम् ॥ ४१ ॥
मरिचं कुडवोन्मानं पिप्पली द्विपलोन्मिता।
सलिलस्याढकं दत्त्वा सर्वमेकत्र कारयेत् ॥ ४२ ॥
विपचेन्मृन्मये पात्रे दारुदर्व्या प्रचालयेत्।
चूर्णान्येषां क्षिपेत्तत्र घनीभूतेऽवतारिते ॥ ४३ ॥
धान्याकं जीरकं पथ्यां चित्रकं मुस्तकं त्वचम्।
बृहज्जीरकमप्यत्र ग्रन्थिकं नागकेशरम् ॥ ४४ ॥
एलाबीजं लवङ्गञ्च पृथग्जातीं पलम्पलम्।
सिद्धे शीते प्रदद्याच्च मधुनः कुडवद्वयम् ॥ ४५ ॥
भक्षयेद्भोजनादर्वाक्पलमात्रमिदं नरः।
अथवा नियता नात्र मात्रां खादेद्यथाऽनलम् ॥ ४६ ॥
मानवः सेवनादस्य वाजीव सुरते भवेत्।
समर्थो बलवान्पुष्टो नित्यं स स्यान्निरामयः ॥ ४७ ॥

ग्रहणीं नाशयेदेव क्षयं श्वासमरोचकम् ।
अम्लपित्तं महाश्वासं रक्तपित्तञ्च पाण्डुताम् ॥ ४८ ॥
*बृहज्जीरकः="मङ्गरैला" इति लोके ॥ ४१–४८ ॥

इत्याम्रपाकः ।

शमयति गोक्षुरचूर्णं छागक्षीरेण साधितं समधु ।
भुक्तं क्षपयति पाण्डयं यज्जनितं कुप्रयोगेण ॥ ४९ ॥

अथ महाचन्दनादितैलमाह—

द्रव्याणि चन्दनादेस्तु चन्दनं रक्तचन्दनम् ।
पत्तङ्गमथ कालीयागुरुकृष्णागुरूणि च ।
देवद्रुसरलं पद्मं पद्मके तृणकेऽपि च ॥ ५० ॥
कर्पूरो मृगनाभिश्च लता कस्तूरिकाऽपि च ।
सिह्लकः कुङ्कुमं नव्यं जातीफलकमेव च ॥ ५१ ॥
जातीपत्रं लवङ्गञ्च सूक्ष्मैला महती च सा ।
कङ्कोलफलकं स्पृक्का पत्रकं नागकेशरम् ॥ ५२ ॥
वालकञ्च तथोशीरं मांसी दारुसिताऽपि वा ।
कृतकर्पूरकश्चापि शैलेयं भद्रमुस्तकम् ॥ ५३ ॥
रेणुका च प्रियङ्गुश्च श्रीवासो गुग्गुलुस्तथा ।
लाक्षा नखश्च रालश्च धातकीकुसुमं तथा ॥ ५४ ॥
ग्रन्थिपर्णञ्च मञ्जिष्ठा तगरं सिक्थकं तथा ।
एतानि शाणमानानि कल्कीकृत्य शनैः पचेत् ॥ ५५ ॥
अनेनाभ्यक्तगात्रस्तु वृद्धाऽशीतिसमोऽपि सः ।
युवा भवति शुक्राढ्यः स्त्रीणामत्यन्तवल्लभः ॥ ५६ ॥
वन्ध्याऽपि लभते गर्भं वृद्धाऽपि तरुणायते ।
अपुत्रः पुत्रमाप्नोति जीवेच्च शरदां शतम् ॥ ५७ ॥
चन्दनादि महातैलं रक्तपित्तं क्षयं ज्वरम् ।
दाहं प्रस्वेददौर्गन्ध्यं कुष्ठं कण्डूं विनाशयेत् ॥ ५८ ॥

*पत्तङ्गं="वकम" इति लोके । कालीयकं="कलम्बकटु" इति

लोके। लता=कस्तूरिका "मुष्कदाना" इति लोके। कङ्कोलफलस्या लाभे जातीपुष्पं ग्राह्यं, तदलाभे लवङ्गं ग्राह्यम्। दारुसिता=[दालचीनी]। शैलेयं="छरे"ति लोके। श्रीवासः=गुग्गुलुः। ग्रन्थिपर्णः=[गठिवन]। अशीतिसमः=अशीतिवार्षिकः॥ ५०–५८॥

अथ मधुपक्वहरीतकीमाह—

दशमूलं कणा वह्निः कपित्थश्च विभीतकम्।
कट्फलं मरिचं विश्वमूलं पिप्पलिसैन्धवम्॥ ५९॥
रक्तरोहीतकं दन्ती द्राक्षाजाजिनिशाद्वयम्।
धात्रीजन्तुघ्नशिखरिश्रृङ्गीदारुपुनर्नवाः॥ ६०॥
धान्याकं देवकुसुमं राजवृक्षस्त्रिकण्टकम्।
वृद्धदारुकुबेराक्षौ मूलं वीरणिकाभवम्॥ ६१॥
एतेषां पलयुग्मन्तु भेषजानां पृथक्पृथक्।
आढकञ्चापि पथ्यायास्तोये पञ्चाढके पचेत्॥ ६२॥
स्विन्ना पथ्या भवेद्यावत्पश्चान्मधु विनिक्षिपेत्।
गुरूपदेशाद्विधिवत्त्रिदिनञ्च ततः परम्॥ ६३॥
पुनः क्षिपेत्पञ्चदिनं तथा च दशवासरम्।
संसिद्धा चाभया पश्चाद् घृतभाण्डे निधापयेत्॥ ६४॥
विमले सुदृढे क्षौद्रपरिपूर्णे प्रयत्नतः।
पश्चात्पूर्वोक्तभाण्डे तु क्षिपेद् बुद्धिपरायणः॥ ६५॥
एषा हरीतकी चैव धन्वन्तरिकृता शुभा।
भक्षयेद्यो नरो नित्यं रोगा नश्यन्ति सर्वशः॥ ६६॥
श्वासं कासक्षयं पाण्डुं हिक्काछर्दिमदभ्रमान्।
मुखरोगं तथा तृष्णामरुचिं वह्निमन्दताम्॥ ६७॥
यकृत्प्लीहोदरञ्चैव वातरक्तं सुदारुणम्।
शिरोऽक्षिकर्णजां पीडां तथा बद्धगुदोदरम्॥ ६८॥
ग्रहणीं दुर्विकाराश्च शोषं दोषत्रयोद्भवम्।
मधुपक्वेति विख्याता हन्ति रोगाननेकशः॥ ६९॥

अथ वानरीं वटिकामाह—

बीजानि तु कपिकच्छ्वाः कुडवमितानि च स्वेदयेच्छनकैः ।
प्रस्थे गोभवदुग्धे तावद्यावद्भवेद्गाढम् ॥ ७० ॥
त्वग्रहितानि च कृत्वा सूक्ष्मं सम्पेषयेत्तानि ।
पिष्टिकया लघुवटिकाः कृत्वा गव्ये पचेदाज्ये ॥ ७१ ॥
द्विगुणितशर्करया ता वटिकाः सम्पक्वया लेप्याः ।
वटिका माक्षिकमध्ये मज्जनयोग्ये विरलतराः स्थाप्याः ॥ ७२ ॥
पञ्चटङ्कमितास्तास्तु प्रातः सायञ्च भक्षयेत् ।
अनेन शीघ्रद्रावी यो यश्च स्यात्पतितध्वजः ॥ ७३ ॥
सोऽपि प्राप्नोति सुरते सामर्थ्यमति वाजिवत् ।
नानेन सदृशं किञ्चिद् द्रव्यं वाजीकरं परम् ॥ ७४ ॥

अथाकारकरभादिवटीमाह—

आकारकरभः शुण्ठी लवङ्गं कुङ्कुमं कणा ।
जातीफलं जातिपुष्पं चन्दनं कार्षिकं पृथक् ॥ ७५ ॥
चूर्णयेदहिफेनन्तु तत्र दद्यात्पलोन्मितम् ।
सर्वमेकीकृतं माषमात्रं क्षौद्रेण भक्षयेत् ॥ ७६ ॥
शुक्रस्तम्भकरं पुंसामिदमानन्दकारकम् ।
नारीणां प्रीतिजननं सवेत निशि कामुकः ॥ ७७ ॥

इत्येकसप्ततितमो वाजीकरणाधिकारः समाप्तः ॥ ७१ ॥

---

# अथ द्विसप्ततितमो रसायनाधिकारः ॥ ७२ ॥

तत्र रसायनस्य लक्षणमाह—

यज्जराव्याधिविध्वंसि वयःस्तम्भकरं तथा ।
चक्षुष्यं बृंहणं वृष्यं भेषजं तद्रसायनम् ॥ १ ॥

अथ रसायनस्य फलं विधिं चाह—

दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।

देहेन्द्रियबलं कान्तिं नरो विन्देद्रसायनात् ॥ २ ॥
नाविशुद्धशरीरस्य युक्तो रासायनो विधिः ।
न भाति वाससि क्लिष्टे रङ्गयोग इवार्पितः ॥ ३ ॥

अथ रसायनप्रयोगानाह—

शीतोदकं पयः क्षौद्रं घृतमेकैकशो हितम् ।
त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः ॥ ४ ॥

मण्डूकपर्ण्याः स्वरसः प्रयोज्यः क्षीरेण यष्टीमधुकस्य चूर्णम् ।
रसो गुडूच्यास्तु समूलपुष्पः कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ॥५॥
आयुः प्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्द्धनानि ।
मेध्यानि चैतानि रसायनानि मेध्या विशेषेण च शङ्खपुष्पी ॥ ६ ॥
*मण्डूकपर्णी=ब्राह्मी, तदलाभे "मञ्जिष्ठा" ग्राह्या, तस्या अपि रसायनत्वात् ॥ ५-६ ॥

माक्षिकेण तुगाक्षीरी पिप्पल्या लवणेन च ।
त्रिफला सितया वाऽपि युक्ता सिद्धं रसायनम् ॥ ७ ॥
सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् ।
वर्षाऽऽदिष्वभया प्राश्या रसायनगुणैषिणा ॥ ८ ॥

पुनर्नवस्यार्द्धपलं नवस्य पिष्टं पिबेद्यः पयसाऽर्द्धमासम् ।
मासत्रयं तत्रिगुणं समं वा जीर्णोऽपि भूयः स पुनर्नवः स्यात् ॥९॥
ये मासमेकं स्वरसं पिबन्ति दिने दिने भृङ्गरजःसमुत्थम् ।
क्षीराशिनस्ते बलवीर्ययुक्ताः समाः शतं जीवनमाप्नुवन्ति ॥१०॥
शतावरी मुण्डितिका गुडूची सहस्तिकर्णा सहतालमूली ।
एतानि कृत्वा समभागयुक्तान्याज्येन किं वा मधुनाऽवलिह्यात् ॥११॥
जरारुजामृत्युवियुक्तदेहो भवेन्नरो वीर्यबलादियुक्तः ।
विभाति देवप्रतिमः स नित्यं प्रभामयो भूरिविवृद्धबुद्धिः ॥ १२ ॥
पीत्वाऽश्वगन्धां पयसाऽर्द्धमासं घृतेन तैलेन सुखाम्बुना वा ।
वीर्यस्य पुष्टिं वपुषो विधत्ते बालस्य शस्यस्य यथाऽम्बुवृष्टिः ॥१३॥

अथ लौहगुग्गुलुमाह—

अयःपलं गुग्गुलुमत्र योज्य पलत्रयं व्योषपलानि पञ्च ।
पलानि चाष्टौ त्रिफलारजश्च कर्षं लिहन्यात्यमरत्वमेव ॥ १४ ॥

अथ रसायनस्य विशेषफलमाह—

न केवलं दीर्घमिहायुरश्नुते रसायनं यो विधिवन्निषेवते ।
गतिं स देवर्षिनिषेवितां शुभां प्रपद्यते ब्रह्म तथैव चाक्षरम् ॥ १५

इति द्विसप्ततितमो रसायनाधिकारः समाप्तः ॥ ७२ ॥



अथ ग्रन्थकर्तृशुभाशीःशंसनम् ।

यावद् व्योमनि विम्बमम्बरमणेरिन्दोश्च विद्योतते
यावत् सप्तपयोधयः सगिरयस्तिष्ठन्ति पृष्ठे भुवः ।
यावच्चावनिमण्डलं फणिपतेरास्ते फणामण्डले
तावत्सद्भिषजः पठन्तु परितो भावप्रकाशं शुभम् ॥ १ ॥
ग्रन्थस्यास्याध्यापकानाञ्जनानां मध्ये नृणामादरं कुर्वतां च ।
श्रीसोमेशादित्यविप्रप्रसादादायुर्दीर्घं सौख्यमास्तां सदैव ॥२॥

इति श्रीलटकनतनयश्रीमन्मिश्रभावविरचिते भावप्रकाशे उत्तरखण्डेऽष्टमं चिकित्साप्रकरणं समाप्तम् ।

समाप्तमिदमुत्तरखण्डम् ।

समाप्तश्चायं ग्रन्थः ।



हरिः ॐ तत्सत् ।